श्रीयुक्त राय धनपति सिंह बहादुरका आगम संग्रह भाग १ प्रथम

# श्री आचारांग जी सूत्र प्रथमांग।

गणधर श्री सुधर्म्मास्वामीकृत मूलसूत्र तदुपरी श्रीशीलङ्काचार्य्यकृत टीका तदुपरी

श्रीजिनहंस सूरिकृत दीपिका तदुपरी पार्श्वचन्द्र सूरिकृत बालावोध।

कलकत्ता।

नूतन संस्कृत यन्त्र मे छपा गया।

रेजिष्टरि कराया गया।

संवत् १९३६।

इय पुस्तक ५०० मकसुदाबाद अजीमगञ्जनिवासी श्रीयुक्त राय धनपति सिंह बहादुरके

तरफसे भंडार करनेको छपी।

# आचारांगसूत्र।

अर्हं जिणवयणकप्परुक्खो अणेगसुत्तत्थसालविच्छिण्णो तवनियमकुसुमगुच्छो सुग्गइफलबंधणो जयइ १ जीवोछक्कायपरूवणायतेसिंवहेणबंधोय विरईइअहिगारो सत्थपरिणाइणायव्वो २ अंगाणयकिंसारो आयारोतस्सकिंहवइसारं अणुओगत्थोसारं तस्सवियपरूवणासारं ३ सारंपरूवणाएचरणं तस्सवियहोइणिव्वाणं णिव्वाणस्सयसारं अव्वाबाहं जिणाविंति ४ सुयंमेआउ

भाषा

। श्रीगुरुभ्यो नमः ॥ प्रणम्य श्रीजिनाधीश श्रीगुरूणामनुग्रहात् । लिख्यते सुखबोधार्थमाचाराङ्गार्थवार्त्तिकं । १ । सुतरांयच्छास्त्रेण येषां बुद्धिरसंस्कृता। व्यामोहो जायते तेषां दुर्गमे वृत्तिविस्तरे। २। ततो वृत्तेः समुधृत्यसुलभो लोकभाषया। धर्मलिप्सूपकारायादिमाङ्गार्थ प्रतन्यते ।३। श्रीजिनशासने द्वादशांगीसूत्रतेमांहे अंगमांहिप्रथमअंगश्रीआचारांग जिणिकारणेमोक्षना अंगआनाचारादिकते इहांप्रथमकह्यिये तिणिए श्रीआचारांगभणिये। तेहनाबेश्रुतस्कंधतिहां पहिलेश्रुतस्कंधे नवअध्ययन तेकेहा शस्त्रपरिज्ञाध्ययन१ लोकविजय २ शीतोष्णीय ३ सम्यक्त्व ४ लोकसार ५ धूत ६ महापरिज्ञा ७ विमोक्ष ८ उपधानश्रुत ९ एनवअध्ययनरूपआचारकहिये बीजेश्रुतस्कंधेतला अध्ययनतेआचाराग्रएहवेनामेबोलाइ तिहांप्रथमश्रुतस्कंधेपहिलेअध्ययनेजीवोक० जीवनोअस्तिताभावछकायनीप्ररूपणा। तेहनेवधेकर्मनोबंधतथाविरतिनो अधिकारएतला अर्थनोसंबंधशस्त्रपरिज्ञायनेजाणिवो बीजेअध्ययनेलोकनोविजयअष्टकर्मजिमथाइं तेमरितथाएजिमछांडियाएहवोअर्थछे। त्रीजेअध्ययने कषायजीतीअनुकूलप्रतिकूलउपसर्गसहिवाएभावछे। चउथे अध्ययनेसम्यक्त्वनीदृढताकरिवीएअर्थछे। पांचमेअध्ययनेलोकनो साररत्नत्रयतेहनेविषे यत्नकरिवोएहवोभावछे। छट्ठेअध्ययनेनिःसंगतासहितचारित्रिये अप्रतिबद्धिइंथाइवो एहवु भावछे सातमेअध्ययने कदाचितसंयमप्रतिपालतासाधुनेपरीसहउपजेतेसम्यक्प्रकारेसहिवा एहवोभावछे। आठमेअध्ययनेसर्वगुणसंयुक्तचारित्रिये अतक्रियासम्यक्प्रकारेकरिवीएहवोभावछे नवमेअध्ययने जेआठअध्ययनविषेजे अर्थभाख्योतेश्रीवर्द्धमानस्वामिसम्यक्प्रकारेआचर्योतेसमस्तसाधुने संयमनाउत्साहनेअर्थेभाख्योछे। एतलानवअध्ययनविषे अर्थाधिकारजाणिवाहिवबीजेश्रुतस्कंधेचूलिका ५ तिहांपंचमीचुलिकानिशीथ तेएहमांहिनालेवी। अनेरीचुलिका ४ तिहांपहिलीचुलिकाइअध्ययन ७ बीजीचूलिकाइअध्ययन ७ त्रीजीअने चउथीये एकएकअध्ययन एवंबीजेस्कंधेअध्ययन १६ एवआचारांगेअध्ययन २५ अनेउद्देशा ८५ एतलाछे हिवेश्रीआचारांग सर्वशास्त्रनोसारजाणिवोजेहकारणे अंगसर्वनो सारआचारबोल्यो तेहनी प्ररूपणाश्रीआचारांगेछे तेहकारणथकी श्रीआचारांगनोभावदृष्यामात्र लोकनाउपकारभणीलिखिदेखे। तेहनोआदिसूत्रश्रुय व्याख्या भगवतश्रीसुधर्मस्वामिजम्बूप्रतिइमकहेछे हे चिरजीवीएहवोशिष्यनो आमंत्रणकरीवोस्वामेएहवोसांभल्यो तेणेंभगवते श्रीमहावीरदेवे इमकह्यो। तेकिसो। इणिसंसारमांहिंएकजिकानावरणीइ आवऱ्या प्राणियानेसम्यकत्तासम्यग्ज्ञाननऊवे। तेकेहोसम्यग्ज्ञाननऊवेतेकहेछे। तजहापुर० मणुयातिरियाकायातहअमीयाचउक्कगाचउरो

दीपिका टीका

॥ अर्हं ॥ शासनाधीश्वरोजीयादर्हमानोजिनेश्वरः। भवन्ति सुखिनोभव्या यदीयशासनाश्रिताः ।१। शीलाङ्काचार्यरचिताटत्तिरस्तिसुविस्तरा। श्रीआचाराङ्गसूत्रस्यदुर्विगाहतरातत ।२। अनुग्रहार्थं सत्त्वानांव्याख्यानृणांसुखावहा। श्रीजिनहंससूरीन्द्रैः रच्यतेस्म

प्रदीपिका ।३। इह द्वादशानामङ्गानां प्रथमाङ्गं श्रीआचाराङ्गं। यतो ज्ञानाचादीनां मोक्षाङ्गभूतानामिह प्ररूपणादाचाराङ्गञ्चाऽयं हि द्वौ श्रुतस्कन्धौ तत्र प्रथमे श्रुतस्कन्धे नवाध्ययनानि तानि चामूनि सत्थपरिन्ना१ लोगविजओ२ सीओसणिज्जं३ सम्मत्तं४ तह लोगसारनाम५ धुवं६ तह महापरिन्ना य७ ।१। अट्ठमए य विमोक्खो८ उवहाणसुयं९ च नवमगं भणियं इच्चेसो आयारो आयरग्गाणि सेसाणि२ स्पष्टार्थं चैवं द्वयं पि नवाध्ययनरूपश्चाचारः द्वितीयश्रुतस्कन्धाध्ययनानि त्वाचाराग्राणि शेषाणीति अथ नवाध्ययनानामर्थाधिकारो यथा जियसंजमो य १ लोगो जह बज्झइ जह य तं पयहियव्वं २ सुहदुक्खतितिक्खा वि य ३ सम्मत्तं ४ लोगसारो य ५ निस्संगया य छट्ठे ६ मोहसमुत्था परीसहोवसग्गा ७ निज्जाणं अट्ठमए नवमे य जिणेण एयं तिः ९ । २ निर्युक्तिगाथाव्याख्या जियसंजमोत्ति जीवेषु संयमो जीवसंयमस्तेषु हिंसादिपरिहारः स च जीवास्तित्वपरिज्ञाने सति भवति अतो जीवास्तित्वविरति प्रतिपादनमत्रार्थाधिकारः तत्र प्रथमं परिज्ञायां संयमार्थाधिकारो यत्र जीवो छक्काय परूवणा य तेसिं वहेण बंधोत्ति विरइए अहिगारो सत्थपरिन्नाए भो १। लोकविजये तु लोगो जह बज्झइ जह य तं पजहियव्वं ति। विजितभावलोकेन संयमस्थितेन लोको यथा बध्यते। अष्टविधेन कर्मणा यथा च तत्प्रहातव्यं तथा ज्ञातव्यमित्ययमर्थाधिकारः ।२। तृतीये त्वयं संयमस्थितेन जितकषायेणानुकूलप्रतिकूलोपसर्गनिपाते सुखदुःखतितिक्षा विधेयेति ।३। चतुर्थे त्वयं प्राक्तनाध्ययनार्थसम्पन्नेन तापसादिकष्टतपसेविना अष्टगुणैश्वर्यं समृद्धीक्ष्यापि दृढसम्यक्त्वेन भवितव्यमिति। ४। पञ्चमे त्वयं चतुरध्ययनार्थस्थितेनासारपरित्यागेन लोकसाररत्नत्रयोद्युक्तेन भाव्यमिति ५। षष्ठे त्वयं प्रागुक्तगुणयुक्तेन निःसङ्गतायुक्तेनाप्रतिबद्धेन भवितव्यं ६। सप्तमे त्वयं संयमादिगुणयुक्तस्य कदाचिन्मोहसमुत्थाः परीषहा उपसर्गा वा प्रादुर्भवेयुस्ते सम्यक् सोढव्या ७। अष्टमे त्वयं निर्याणमन्तक्रियासा सर्वगुणयुक्तेन सम्यग्विधेयेति ८ नवमाध्ययने त्वयं अष्टाध्ययनेन प्रतिपादितोर्थः । सम्यगेव वर्द्धमानस्वामिना विहित इति तत्प्रतिपादनं चाशेषसाधूनामुत्साहार्थं इति नवाध्ययनार्थाधिकारः । अथ उद्देशाधिकारः। तत्र प्रथमे श्रुतस्कन्धे नवस्वध्ययनेषु क्रमेण सप्त षट्२ चत्वार ३ चत्वार४ षट्५ पंच६ अष्ट७ चत्वारः ८ सप्त९ उद्देशा भवन्ति। द्वितीये श्रुतस्कन्धे पञ्च चूलिका। तासु पञ्चमी निशीथाख्या सा इहानुक्ता ते भिन्नस्थानरूपत्वात्तस्याः । तदन्याश्चतस्रः तासु च प्रथमद्वितीये सप्तसप्ताध्ययनात्मिके तृतीये चतुर्थी च एकैकाध्ययनात्मिके तत्र प्रथमचूलिकायां सप्ताध्ययनेषु क्रमेण उद्देशकसङ्ख्या यथा । प्रथमाध्ययने एकादश द्वितीये त्रय तृतीये त्रयः शेषेषु चतुर्षु द्वौ द्वौ उद्देशकौ द्वितीयायां चूलिकायां सप्तैकसराणि अध्ययनानि तृतीया चूलिका एकाध्ययनात्मिका एवं चतुर्थ्यपि चूलिका एकाध्ययनात्मिका एवं सर्वमीलने पंचाशीति उद्देशनकाला भवन्ति यत्र समवायाङ्गेनाप्युक्तं सेणं अंगट्ठयाए पढमे अंगे दो सुयक्खंधा पणवीसं अज्झयणा पंचासीइं समुद्देसणकाला अट्ठारस पयसहस्साइं पयग्गेणं पन्नत्ताइं इत्याद्यागमवचनात् कालिकश्रुतमाचाराङ्गं योगविना कालग्रहणैर्विना तपसा च पठति वाचयति श्रावयति अथवा तपसः पार्श्वे यः शृणोति तस्य सूत्राज्ञाभङ्गदोषः आगमाज्ञा भङ्गो भवति इत्याचाराय आचारो मोक्षाङ्गं यतो निर्युक्तिकृदाह। अंगाणं किं सारो आयारो तस्स किं हवइ सारो अणुओगत्थो सारो तस्स वि य परूवणा सारो ।१। सारो परूवणाए चरणं तस्स वि य होइ निव्वाणं निव्वाणस्स उ सारो अव्वाबाहं जिणा विंति २। सांप्रतमाचारादिप्रदानस्य सुखप्रतिपत्तये दृष्टान्तोपन्यासेन विधिराख्यायते यथा कश्चिद्राजाऽभिनवनगरनिवेशेच्छया भूखण्डानि विभज्य सम प्रयाम प्रकृतिभ्यो दत्तवांस्ताश्च कचवरापनयने शल्योद्धारे भूस्थिरीकरणे प्रकोष्ठकापीठप्रासादरचनेरत्नाद्युपादाने चोपदेशं दत्तवान् ताश्च प्रकृतयस्तदुपदेशद्वारेण तथैव कृत्वा यथाभिप्रेतान् भोगान् बुभुजिरे। अयमत्रार्थोपनयः राजसदृशेन सूरिणा प्रकृतिसदृशस्य शिष्यगणस्य भूखण्डसदृशः संयमो मिथ्यात्वकचवराद्यपनीयसर्वोपधाशुद्धस्यारोपणीयस्तच्च सामायिकसंयमं स्थिरीकृत्य प्रकोष्ठकापीठतुल्यानि व्रतानि आरोपणीयानि तत्र प्रासादकल्पो यमाचारो विधेय सालस्य शरीरं ग्रामाचाराद्यादिरत्नान्यादत्ते निर्वाणभाग्भवति अथ शस्त्रपरिज्ञाध्ययनस्य नामाह निर्युक्तिकृदाह शस्त्रपरिज्ञेति द्विपदं नाम शस्त्रस्य निक्षेपश्चाह दव्वं सत्थग्गिविसनेह बिलखारलोणमादीय भावो उ दुप्पउत्तो वायाकाया अविरतीय। १। शस्त्रस्य निक्षेपो नामादिश्चतुर्धा तत्र नामस्थापने क्षुण्णे व्यतिरिक्तं द्रव्यशस्त्रं खड्गादि अग्निविषस्नेहाम्ल

नस्यचनिर्जरार्थत्वात्निर्जरार्थत्वेनचतस्याविप्रतिपत्तिरयदुक्तं । जंअन्नाणीकम्मं खवेइबहुयाहिंवासकोडीहिंतन्नाणी तिहिं गुत्तोखवेइऊ
सासमित्तेणमङ्गलन्दनिरुक्तंचमांगालयत्यपनयतिभवादितिमङ्गलं । माभूद्विघ्नोगलोवानाश शास्त्रस्येतिमंगलमित्यादिशेषस्त्वाक्षेप
परिहारादिकमन्यतोऽवसेयमिति । साम्प्रतमाचारानुयोग मारभ्यतेआचारस्यानुयोगोऽर्थकथनमाचारानुयोग सूत्रादनुपश्चादर्थस्ययोगो
नुयोग, सूत्राध्ययनात्पश्चादर्थकथनमितिभावना । यद्वाऽणोर्लघीयस सूत्रस्यमहतार्थेनयोगोनुयोग, सचामीभिर्द्वारैरनुगन्तव्यस्तद्यथा
निक्खेवेगट्ठनिरुत्तिविहिपवित्तीयकेणवाकस्स तद्दारभेयलक्खणतदरिहपरिसाएसुत्तत्थो तत्र निक्खेवोनामादि । तत्रथानामस्थापने
क्षुण्णे द्रव्यानुयोगोद्विधा । आगमतोनोआगमतश्चतत्रागमतोज्ञातातत्रचानुपयुक्तोनो आगमतोज्ञशरीरभव्यशरीरतद्व्यतिरिक्तोनेकधा
द्रव्ये वर्णिकादिनाद्रव्यस्यपरमाण्वादेर्द्रव्ये निषद्यादौक्षेत्रानुयोग क्षेत्रेणक्षेत्रस्यक्षेत्रेवानुयोग क्षेत्रानुयोगएवकालेनकालस्यकाले
वानुयोग कालानुयोग वचनानुयोगएकवचनादिनाभावानुयोगोद्विधाआगमतोनोआगमतश्चतत्रागमतोज्ञातोपयुक्तोनोआगमतस्त्वौ
पशमिकादिभावैर्भावानुयोगोऽर्थकथनभावानुयोग शेषमावश्यकानुसारेणज्ञेयकेवलमिहानुयोगस्यप्रस्तुतत्वात्तस्यचाचार्याधीनत्वात्
केनेतिद्वारविव्रियते तत्रोपक्रमादीनिचद्वाराणिप्रचुरतराणि प्रचुरतरोपयोगित्वात्प्रदर्श्यन्ते तत्रकेनेतिकथंभूतेनयथाभूतेनचसूरिणा
व्याख्याकर्त्तव्यातथाप्रदर्श्यन्ते देसकुलजाइरूवीसंघयणीधिइजुत्तोअणासंसी अविकत्थणोअमाई थिर परिवाडीगहियवक्को१ जियपरि
सोजियनिद्दोमज्झत्थोदेसकालभावन्नु आसन्न लद्धपइभोणाणाविहदेसभासन्नु २ पंचविहे आयारेजुत्तोसुत्तत्थतदुभयविहिन्नु आहरण
हेउकारणणयणिउणोगाहणाकुसलो३ ससमयपरसमयविऊगंभीरोदित्तिमंसिवोसोमो गुणसयकलिओजुत्तोपवयणसारंपरिकहेउं४
आर्यदेशोत्पन्नं सुखावबोधवचनोभवतीत्यतोदेशग्रहण पैतृकंकुलमिक्ष्वाक्वादिज्ञातकुलश्चयथोत्क्षिप्तभारवहनेन श्राम्यतीतिमातृकीजा
तिस्तत्सम्पन्नोविनयादिगुणवान्भवति यत्राकृतिस्तत्रगुणावसन्तीतिरूपग्रहण संहननधृतियुतोव्याख्यानादिषु नखेदमेति अनाशंसी
श्रोतृभ्योनवस्त्राद्याकांक्षति अविकत्थनोहितमितभाषी अमायीसर्वत्रविश्वास्य स्थिरपरिपाटिपरिचितग्रन्थस्यसूत्रार्थगलनासम्भवात्
ग्राह्यवाक्य.सर्वत्रास्खलिताज्ञ जितपर्षत्राजादिसदसि नक्षोभमुपयाति जितनिद्रोऽप्रमत्तत्वाद्विनिद्रान्प्रमादिनः शिष्यान्सुखेनैवप्रबोध
यति मध्यस्थ शिष्येषुसमचित्तोभवति देशकालभावज्ञसुखेनैवगुणवद्दशादौ विहरिष्यति आसन्नलब्ध प्रतिभोद्राक्परवाद्युत्तरदान
समर्थोभवति नानाविधदेशभाषाविधिज्ञश्च नानाविधदेशजा शिष्या व्याख्यानसुखमवाप्स.तेज्ञानाद्याचारपञ्चकयुक्त श्रद्धेयवचनो
भवतिसूत्रार्थ तदुभयविधिज्ञश्चतसर्गापवादप्रपञ्चयथावद् ज्ञापयिष्यतिहेतूदाहरणनिमित्तनयप्रपञ्च, अनाकुलोहेत्वादीनाचष्टेग्राह
णाकुशलोयक्तीभिर्युक्तिभिशिष्यान् बोधयतिस्वसमयपरसमयज्ञ, सुखेनैवतत्स्थापनोच्छेदौकरिष्यतिगंभीर खेदसह दीप्तिमान्परास
ह्यशिवहेतुत्वात् शिवस्तदधिष्ठितदेशेमार्युद्यूपशमनात् सौम्य सर्वजननयनमनोरमणीयगुणशतकलित प्रश्रयादिगुणोपेत' एवं
विध सूरि'प्रवचनानुयोगे योग्यो भवति तस्यचानुयोगस्य महापुरस्यैवचत्वार्यनुयोगद्वाराणिव्याख्याङ्गानिभवन्ति तद्यथाउपक्रमोनिक्षे
पोनुगमोनय तत्रोपक्रमणमुपक्रम उपक्रम्यतेनेनावाऽऽदस्मिन्निति चोपक्रम, व्याचिख्यासितशास्त्रस्यसमीपानयनमित्यर्थ, सचशास्त्रीय
लौकिकभेदाद्द्विधातत्र शास्त्रीय' आनुपूर्वीनामप्रमाणवक्तव्यतार्थाधिकार: समवतारश्चेति लौकिकोनामस्थापनाद्रव्यक्षेत्रकालभाव
भेदात् षोढैव निक्षेपणमनेनाऽस्मादस्मिन्निति वानिक्षेप उपक्रमानीतस्यव्याचिख्यासितशास्त्रस्यनामादिन्यसनमित्यर्थ. सचत्रिविध
तद्यथा ओघनिष्पन्नोनामनिष्पन्न सूत्रालापकनिष्पन्नश्चतत्रौघनिष्पन्नोऽध्ययनादिसामान्याभिधानन्यास: नामनिष्पन्नआचारश
स्त्रपरिज्ञादिविशेषाभिधाननामादिन्यास सूत्रालापकनिष्पन्नश्चसूत्रालापकानांनामादिन्यसनमिति अनुगमनमनेनाऽस्मादस्मिन्निति
वानुगम अर्थकथनमित्यर्थ सचद्विधानिर्युक्त्यनुगम सूत्रानुगमश्चेतितत्र निर्युक्त्यनुगमस्त्रिविधस्तद्यथानिक्षेपनिर्युक्त्यनुगम,उपोद्घात
निर्युक्त्यनुगम सूत्रस्पर्शिकनिर्युक्त्यनुगमश्चेति तत्र निक्षेपनिर्युक्त्यनुगमोनिक्षेपएव सामान्यविशेषाभिधानयोरोघनिष्पन्ननामनि
ष्पन्नाभ्यां निक्षेपाभ्यामनुगत सूत्रालापकाश्रया वक्ष्यमाणलक्षणाश्चेति उपोद्घातनिर्युक्त्यनुगमश्चाभ्यां द्वारगाथाभ्यामनुगन्तव्यस्तद्यथा

सर्वाकाशप्रदेशसङ्ख्यायाअनन्तगुणंसर्वनभ प्रदेशवर्गीकृतप्रमाणमित्यर्थः. ततोद्वितीयादिस्थानैरसंख्यात गच्छगतैरनंतभागादिकयाष्ट
स्थानपट्स्थानकानामसङ्ख्येयस्थानगताश्रेणिर्भवति एवंचैकमपिस्थानंसर्वपर्यायान्वितंनशक्यते परिच्छेत्तुंकिंपुनस्सर्वाण्यपीत्यत अन्येपर्याया
येषामनंतभागेवर्तानिवर्तिरच्चितिस्थान्यतिरन्ये केवलगम्याइतीदमुक्तं भवति केवलगम्याप्रज्ञापनीयपर्य्यायाणामपितत्र प्रत्यपादकत्व
मेवमपिस्थानश्रेयसूल्यत्वात्तुल्याएवनानंतगुणाइति अत्राचार्य्याआह यासौसंयमस्थानश्रेणिर्निरूपितातासर्वाचारित्रपर्य्यायैर्ज्ञानद
र्शनपर्यायसचिते परिपूर्णातत्प्रमाणासर्वाकाशप्रदेशानंतगुणा इहपुनश्चारित्रमात्रोपयोगित्वात्पर्यायान तभागवर्त्तित्वमित्यदोष इदा
नीसारद्वारं कस्यसारइत्याह अंगाणमित्यादिस्पष्टाकेवलमनुयोगार्थोव्याख्यानमूलोर्थस्तस्यप्ररूपणायथास्वंविनियोगइतिअन्यत्रसारो
इत्यादिस्पष्टैवइदानींश्रुतस्कंधपदयोर्नामादिनिक्षेपादिकंपूर्ववद्विधेयंभावेनचेहाधिकारभावश्रुतस्कंधयब्रह्मचर्यात्मकइत्यतोब्रह्मचर
णयोर्निक्षेपव्याचिख्यासयाह बंभमीत्यादि तत्रब्रह्मनामादिचतुर्धातत्रनामब्रह्मेत्यभिधानं असद्भावस्थापनाचाक्षादौसद्भावस्थापनाम
तिविशिष्टयज्ञोपवीताद्याकृतिपक्षे भादौद्रव्येचस्थापनायांब्राह्मणोत्पत्तिर्वक्तव्यातत्प्रसंगेनचशेषाणांवर्णानांवर्णान्तराणांचोत
त्पत्तिर्भणनीयेतिपथाप्रतिज्ञातमाह एकाइत्यादियावन्नाभेयोभगवान्राजापि राजलक्ष्मीमध्यास्तेतावदेकैवमनुष्यजातिस्तस्यैवराज्यो
त्पत्तौभगवंतमेवाश्रित्ययेस्थितास्तेक्षत्रियागेपाश्च शोचनाद्रोदनाच्चशूद्रा पुनरग्न्युत्पत्तावयस्कारादि शिल्पवाणिज्यवृत्त्यावेशनाद्वैश्या
भगवतोज्ञानोत्पत्तौभरतकाकणीलाञ्छनाश्रावकाएवब्राह्मणाजज्ञिरे एतेशुद्धाश्चत्वारोवर्णाःअन्येगाथान्तरित गाथायाप्रदर्शयिष्यन्ते सांप्रत
मेवर्णान्तरनिष्पन्नसंख्यानमाह संजोगेइत्यादिसंयोगेनषोडशवर्णाः समुत्पन्नास्तत्रसप्तवर्णानवतुवर्णान्तराणि एतच्चवर्णवर्णान्तरवि
कल्पद्वयंस्थापनाब्रह्मेतिज्ञातव्यं सांप्रतपूर्वसूचितवर्णत्रयमाह अदिसायगुहित्यनृश्चेव पाइएगइत्यादिप्रकृतयश्चतस्रोमित्रब्राह्मणक्षत्रिय
वैश्यशूद्राख्यास्तासामेवचतसृणामनन्तरयोगेनप्रत्येकवर्णत्रयोत्पत्तिस्तद्यथाद्विजेनक्षत्रिययोषितोजातःप्रधानक्षत्रियसंकरक्षत्रियोवाएवं
क्षत्रियेणवैश्ययोषितोवैश्येनशूद्रायांप्रधानसंकरभेदोवक्तव्यावित्येवंसप्तवर्णाभवति अनन्तरेषुयोगेषुप्रधानानन्तरास्तेषुपरमपदेशव्यपदेशोभव
तिब्राह्मणेनक्षत्रियायांक्षत्रियोभवतीत्यादिसप्तसुस्थानेप्रधानोभवतीतिभावइदानींवर्णान्तराणांनवानांनाम्याह अंबेत्यादिअम्बष्ठउग्र:
निषाद. अयोगवस्मागध सूत.क्षत्ताविदेहचाण्डालश्चेति कथमेतेभवतीत्याह एगंतेइत्याहपडिलोमेइत्यादि बीयंतरिएइत्यादि
आसामर्थोयथनकादवसेयस्तच्चेद एतानियवर्णवर्णान्तराणि इदानींवर्णान्तराणांसंयोगोत्पत्तिमाह उग्गेणेत्यादिस्स्ईयेत्यादिश्चनयोर
प्यर्थोयन्त्रकादवसेय तच्चेद गर्तस्थापनाब्रह्म इदानींद्रव्यब्रह्मप्रतिपादनायाह दव्वमित्यादिज्ञशरीरभव्यशरीरव्यतिरिक्तं शाक्यपरि
व्राजकादीनामज्ञानानुगतचेतसांवस्तिनिरोधमात्र विधवाप्रोषितभर्तृकादीनाञ्च कुलव्यवस्थार्थंकारिताऽनुमतियुक्तं द्रव्यब्रह्मभावब्रह्म
तुसाधूनांवस्तिसंयमोष्टादशभेदरूपोप्यसंयमएव सप्तदशविधसंयमाभिन्नरूपत्वादस्येतिअष्टादशभेदास्त्वमौदिव्यात्कामरतिसुखात्त्रिवि
धत्रिविधेनविरतिरितिनवक औदारिकादपितथातच्चाष्टादशविकल्पचरणनिक्षेपार्थमाहचरणमित्यादिचरणनामादिषोढाव्यतिरि
क्तं द्रव्यचरणंत्रिधाभवतिगतिभक्षणगुणभेदात्तत्रगतिचरणंगमनमेवभक्षणचरणंमोदकादेर्गुणचरणंद्विधालौकिकंलोकोत्तरंचलौकि
कंयत्द्रव्यार्थंहस्तिशिक्षादिकंवैद्यकादिकंवायच्चतेलोकोत्तरसाधूनामनुपयुक्तचरणमुदायिनृपमारकादेर्वाचेलचरणंय क्षिप्रंचेलेगत्वा
हारादिचर्य्यतेव्याख्यायतेवाग्रन्थसामान्यान्तर्भावाद्वाणालिचेवादिचरणमिति कालेप्येवमेवभावमाह भावेइत्यादिभावचरणमपिगत्या
हारगुणभेदात्त्रिधातत्रगतिचरणंसाधोरुपयुक्तस्ययुगमात्रदत्तदृष्टेर्गच्छतःभक्षणचरणमपिशुद्धं पिण्डमुपभुञ्जानस्यगुणचरणमप्रशस्तमि
थ्यादृष्टीनांसम्यग्दृष्टीनामपिसनिदानंप्रशस्त तेषामेवकर्मोद्घाटनार्थमलोत्तरगुणकलापविषयमिहचानेनैवाधिकारोयतोनवाप्यध्ययनानिमू
लोत्तरगुणस्थापनानिर्जरार्थमनुशील्यन्तेएतेषांचान्वर्थाभिधानानिदर्शयितुमाह सत्थइत्यादिअट्ठमएइत्यादिस्पष्टे केवलमित्येषनवा
ध्ययनरूपआचारोद्वितीयश्रुतस्कंधाध्ययनानितु शेषाण्याचाराग्राणीतिसांप्रतमुपक्रमान्तर्गतोर्थाधिकारोद्वेधाध्ययनार्थाधिकारउद्देशा
र्थाधिकारश्चतत्राद्यमाह जिणइत्यादिणिप्पगइत्यादि तत्रशस्त्रपरिज्ञायामयमर्थाधिकारो जियसंजमोत्ति जीवेषुसंयमोजीवसंयम

सेषु हिंसादिपरिहार सचजीवास्तित्वपरिज्ञाने सति भवत्यतो जीवास्तित्वविरतिप्रतिपादनमत्रार्थाधिकार लोकविजये तु लोको जह बज्झ इज हयतंपजहियव्वं ति विजितभावलोकेन संयमस्थितेन लोको यथा बध्यते अष्टविधेन कर्मणा यथा च तत्प्रहातव्यं तथा ज्ञातव्यमित्ययमर्थाधिकार तृतीये त्वयं संयमस्थितेन जितकषायेणानुकूल प्रतिकूलोपसर्गनिपाते सुखदुःखतितिक्षा विधेयेति चतुर्थे त्वयं मार्गनाध्ययनार्थसंपन्नेन तापसादिकष्टतप सेविनामष्टगुणैश्वर्यमुद्वीक्ष्यापि दृढसम्यक्त्वेनभवितव्यमिति पंचमे त्वयं चतुरध्ययनार्थस्थितेना सारपरित्यागेन लोकसाररत्नत्रयोद्युक्तेन भाव्यमिति षष्ठे त्वयमायुक्तगुणयुक्तेन निःसंगतायुक्तेनाप्रतिबद्धेन भवितव्यं सप्तमे त्वयं संयमादिगुणयुक्तस्य कदाचिन्मोहसमुत्थाः परीषहोपसर्गा वा प्रादुर्भवेयुस्ते सम्यक् सोढव्याः, अष्टमे त्वयं निर्याणमन्तक्रियाख्या सर्वगुणयुक्तेन सम्यग्विधेयेति नवमे यं षडध्ययनप्रतिपादितोर्थः सम्यगेव वर्द्धमानस्वामिना विहित इति तत्प्रदर्शनं च शेषसाधूनामुत्साहार्थं तदुक्तं जियसंजमोय लोगोजह बज्झइ जहयतं पजहियव्वं सुहदुक्खतितिक्खाविय सम्मत्तं लोगसारोय निस्संगया य छट्ठे मोहसमुत्था परीसहोवसग्गा निज्जाणं अट्ठमए नवमगम्मि य जिणेणं एवं किल आसि उज्जमियंति॥ सांप्रतमुद्देशार्थाधिकार शस्त्रपरिज्ञाया अथ जीव इत्यादि तत्र प्रथमोद्देशके सामान्येन जीवास्तित्वं प्रतिपाद्य शेषेषु षट्सूद्देशकेषु पृथिवीकायाद्यस्तित्वमिति सर्वेषां चावसाने बंधविरतिप्रतिपादनमिति एतच्चातिस्पष्टत्वान्नप्रतन्यते सांप्रतमुद्देशार्थेषु योऽन्तिमः प्रथमोद्देशके जीवस्तद्वधे बंधो विरतिश्चेत्येवमिति तत्र शस्त्रपरिज्ञेति द्विपदं नाम शस्त्रस्य निक्षेपमाह दव्वमित्यादि शस्त्रस्य निक्षेपो नामादिश्चतुर्धा व्यतिरिक्तं द्रव्यशस्त्रं खड्गाद्यग्निविषस्नेहाम्लक्षारलवणादिक भावशस्त्रं तु दुष्प्रयुक्तो भावोऽसंयमरूपः तथा वाक्कायाविरतिश्चेति जीवोपघातकारित्वादिति भाव. परिज्ञापि चतुर्द्धा दव्वमित्यादि तत्र द्रव्यपरिज्ञा द्विधा ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञा च ज्ञपरिज्ञा आगमनोआगमभेदाद्विधा आगमतो ज्ञाता अनुपयुक्तः नोआगमतस्त्रिधा तद्व्यतिरिक्ता द्रव्यज्ञपरिज्ञा यो यद्द्रव्यं जानीते सचित्तादि सा परिच्छेदद्रव्यप्राधान्याद्द्रव्यपरिज्ञेति प्रत्याख्यानपरिज्ञाप्येवमेव तद्व्यतिरिक्ता द्रव्यप्रत्याख्यानपरिज्ञा देहोपकरणपरिज्ञानं उपकरणं रजोहरणादि साधकतमत्वात् भावपरिज्ञापि द्विधैव ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञा च तत्रागमतो ज्ञातोपयुक्तश्च नो आगमतस्त्विदमेवाध्ययनं ज्ञानक्रियारूपं नो आगमः स्यादित्यवाचितत्वात् प्रत्याख्यानभावपरिज्ञापि तथैव आगमतः पूर्ववत् नोआगमतस्तु प्राणातिपातनिवृत्तिरूपा मनोवाक्कायकृतकारितानुमतिभेदात्रिका ज्ञेयेति गतो नामनिष्पन्नो निक्षेपः सांप्रतमाचारादिमहानस्य सुखप्रतिपत्तये दृष्टान्तोपन्यासेन विधिराख्यायते यथा कश्चिद्राजाभिनवनगरनिवेशेच्छया भूखण्डानि विभज्य समतया प्रकृतिभ्योदत्तवांस्ताश्च कचवरापनयनेशल्योद्धारे भूस्थिरीकरणे पक्वेष्टकापीठप्रासादरचनेरताद्युपादाने चोपदेशं दत्तवांस्ताश्च प्रकृतयस्तदुपदेशानुसारेण तथैव कृत्वा यथाभिप्रेतान्भोगान्भुंजिरे अयमत्रार्थोपनय राजस्थानीयेन सूरिणा प्रकृति स्थानीय शिष्यगणस्य भूखण्डस्थानीयं संयमो मिथ्यात्वकचवरादपनीय शर्माणि विशुद्ध्यारोपणीय संयमसामायिकसंयम स्थिरीकरणपक्वेष्टिकापीठतुल्यानि व्रतान्यारोपणीयानि तत्प्रासादकल्पोयमाचारो विधेयस्तत्रस्थश्च शेषशास्त्रादिरनात्यादनन्तरं निर्वाणभाग्भवतीति सांप्रतं सूत्रानुगमे स्खलितादिगुणलक्षणोपेतं सूत्रमुच्चारणीयं तच्चेदं सुयं मे आउसं तेणं

---

संतेणंभगवयाएवमक्खायं इहमेगेसिंणोसण्णाभवइतं जहापुरत्थिमाओवादिसाओ आगओअहमं
सिदाहिणाओवादिसाओ आगओअहमंसि पच्चत्थिमाओवादिसाओ आगओअहमंसिउत्तरा
ओवादिसाओ आगओअहमंसि उड्ढाओवादिसाओ आगओअहमंसिअहेदिसाओवा आगओअ
हमंसि अण्णयरीओवादिसाओअणुदिसाओवाआगओअहमंसि एवमेगेसिंणोणायंभवतिअत्थिमेआ

---

भाषा

देशानैरस्याथाअहारसङ्क तिमावदिशा १ इतिवचनात् तं॰ तेसमाजिमनऊहतेकहियेछे कुं पूर्वदिसियकीआव्योअथवादक्षिण यकोअथवापश्चिमयकी अथवाउत्तरयकी अथवाऊर्द्ध दिसियकी अथवाअधोदिसियकीऊ आव्योकुं तथाअनेरिदिसिअथवाअनुदि

ऐश्वर्यादिषड्र्थात्मकः सोऽस्यास्तीति भगवान् तेनैवमिति वक्ष्यमाणविधिनाख्यातमित्यनेन समस्तवस्तूदासेनार्थरूपतया आगमस्य नित्यत्वमाह इहेति क्षेत्रे प्रवचने आचारे शस्त्रपरिज्ञायां व्याख्यातमिति संबन्धो यदि वेहेति संसारे एकेषां ज्ञानावरणीयावृतानां प्राणिनां नो संज्ञा भवति संज्ञानं संज्ञा स्मृतिरवबोध इत्यनर्थान्तरं सा नो जायत इत्यर्थः उक्तश्च पदार्थः पदविग्रहस्तु सामासिकपदाभावादप्रकटनमिदानीं चालना ननु चाकारादिकप्रतिषेधकलघुशब्दसंभवे सति किमर्थं नोशब्देन प्रतिषेध इत्यत्र प्रत्यवस्था सत्यमेवं किन्तु प्रेक्षापूर्वकारितया नोशब्दो पादानं स चेह मध्ये न प्रतिषेधेन सर्वनिषेधः स्याद्यथा न घटोऽघट इति चोक्ते सर्वात्मना घटनिषेधः स चानेष्टस्तेन यतः प्रज्ञापनायां दश संज्ञाः सर्व प्राणिनामभिहितास्तासां सर्वासां प्रतिषेधः प्राप्नोतीति तत्वात्ताश्चेमा कइ णं भंते सण्णाओ पण्णत्ताओ गोयमा दस सण्णाओ पण्णत्ताओ तंजहा आहारसण्णा भयसण्णा मेहुणसण्णा परिग्गहसण्णा कोहसण्णा माणसण्णा मायासण्णा लोभसण्णा ओहसण्णा लोगसण्णा आसां चाप्रतिषेधे स्पष्टो दोषोऽतो नोशब्दे न प्रतिषेधनमकारि यतो नोशब्दः सर्वनिषेधवाची देशनिषेधवाची च तत्र यदि नोघट इत्युक्ते यथा घटाभावमात्रं प्रतीयते तथा प्रकरणादिप्रसक्तस्य विधानं स पुनर्विधीयमानः प्रतिषेध्यावयवो ग्रीवादिः प्रतिषेध्यादन्यो वा पटादिः प्रतीयत इति तथा चोक्तं प्रतिषेधयति समस्तं प्रसक्तमर्थं च जगति नोशब्दः स पुनस्तदवयवे वा तस्मादर्थान्तरे वा स्यादिति एवमिहापि न सर्वसंज्ञानिषेधोऽपि तु विशिष्टसंज्ञानिषेधो यथात्मादिपदार्थस्वरूपं गत्यागत्यादिकं ज्ञायते तत्संज्ञानिषेध इति सांप्रतं निर्युक्तिकृत् संज्ञावयवनिक्षेपार्थमाह दव्वे इत्यादि संज्ञानामादि भेदाच्चतुर्धा नामस्थापने क्षुण्णे ज्ञशरीरभव्यशरीरव्यतिरिक्ता सचित्ताचित्तमिश्रभेदात्त्रिधा सचित्तेन हस्तादिद्रव्येण पानभोजनादि संज्ञा अचित्तेन ध्वजादिना मिश्रेण प्रदीपादिना संज्ञानं संज्ञावगम इति भावसंज्ञा पुनर्द्विधा अनुभवनसंज्ञा ज्ञानसंज्ञा च तत्राल्प व्याख्येयत्वात्तावत् ज्ञानसंज्ञां दर्शयति मइ इत्यादि ज्ञायतेऽनयेति मननं मतिरवबोधः सा च मति ज्ञानादि पञ्चधा तत्र केवलसंज्ञा क्षायिकी शेषा स्तु क्षायोपशमिक्यः आनुभवनसंज्ञा तु स्वकृतकर्मोदयादिसमुत्था जायते सा च षोडशभेदेति दर्शयति आहारेत्यादि आहाराभिलाषा ऽऽहारसंज्ञा सा च तैजसशरीरनामकर्मोदयादसातोदयाच्च भवति भयसंज्ञा त्रासरूपा परिग्रहसंज्ञा मूर्छारूपा मैथुनसंज्ञा स्त्र्यादिवेदोदयरू पा एताश्च मोहनीयोदयात् सुखदुःखसंज्ञे साताऽसातानुभवरूपे वेदनीयोदयजे मोहसंज्ञा मिथ्यादर्शनरूपा मोहोदयात् विचिकित्सासंज्ञा चित्तविप्लुतिरूपा मोहोदयात् ज्ञानावरणीयोदयाच्च क्रोधसंज्ञा अप्रीतिरूपा मायासंज्ञा वक्रतारूपा लोभसंज्ञा गृद्धिरूपा शोकसंज्ञा विप्र लापवैमनस्यरूपा एता मोहोदयजा लोकसंज्ञा स्वच्छन्दघटितविकल्परूपा लौकिकाचरिता यथा न सन्त्यनपत्यस्य लोकाः श्वानो यक्षा विप्रा देवाः काकाः पितामहाः बर्हिणां पक्षवातेन गर्भ इत्येवमादिका ज्ञानावरणक्षयोपशमान्मोहोदयाच्च भवति धर्मसंज्ञा क्षमाद्यासेवनरूपा मोह नीयक्षयोपशमाज्जायते एताश्चाविशेषोपादानात् पञ्चेन्द्रियाणां सम्यग्मिथ्यादृष्ट्या ओघसंज्ञा तु अव्यक्तोपयोगरूपा वल्लिवितानारोहणा दिलिंगा ज्ञानावरणीयाल्पक्षयोपशमसमुत्था द्रष्टव्येति इह पुनर्ज्ञानसंज्ञयाधिकारो यत इह सूत्रेऽपि संनिहितादिह एकेषां नो संज्ञानमवबोधो भव तीति प्रतिषिद्धज्ञानविशेषावगमार्थमाह सूत्रं तं जहेत्यादि णो णायं भवतीति यावत् तद्यथेति प्रतिज्ञातार्थोदाहरणं पुरच्छिमाओ दिसा ओ इत्यस्यां मागधदेशीभाषानुवृत्त्या पूर्वस्या दिशो अभिधायकात् पुरच्छिमाशब्दात् पञ्चम्यास्तसा निर्देशः वाशब्दः उत्तरपक्षापेक्षया विकल्पार्थः यथा लोके भोक्तव्यं वा शयितव्यं वेति एवं पूर्वस्या वा दक्षिणस्या वेति दिशतीति दिक् अतिसर्जति व्यपदिशति द्रव्यं द्रव्यभागं वेति भावः तां नि र्युक्तिकृन्निक्षेप्तुमाह नामं इत्यादिना नामस्थापनाद्रव्यक्षेत्रतापप्रज्ञापकभावरूपः सप्तधा दिग्निक्षेपो ज्ञातव्यः तत्र सचित्तादेर्द्रव्यस्य दिगित्य भिधानं नामदिक् चित्रलिखितजम्बूद्वीपादेर्दिग्विभागस्थापनं स्थापनादिक् द्रव्यदिग्निक्षेपार्थमाह तेरसेत्यादि द्रव्यदिक् द्विधा आगमतो नोआगमतश्च आगमतो ज्ञाता अनुपयुक्तो नोआगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्ता त्रयोदशप्रदेशिकं द्रव्यमाश्रित्य यामहत्त्वा क्षुरप्रधारणे त्रयोदशप्रदेशिकद्रव्यमाश्रित्य यामहत्त्वा क्षुल्लकप्रतरणे त्रयोदशप्रदेशिकमेव दिक् न पुनर्दशप्रदेशिकं यत् कैश्चिदुक्तमिति प्र देशाः परमाणवस्तैर्निष्पादितं कार्यद्रव्यं तावत्सु चैव प्रदेशेष्ववगाढं जघन्यं द्रव्यमाश्रित्य यद्दिग्विभागपरिकल्पनातो द्रव्यदिगिय मिति तत्स्थापनाविधानार्थं नवप्रदेशिकमभिलिख्य तस्य दिक्षु एकैकाणुवृद्धिः कार्या क्षेत्रदिशमाह अट्ठेत्यादि तिर्यग्लोकमध्ये रत्नप्र

भाद्दथिव्याउपरिवङ्कमध्यदेशेमेर्व्यन्तर्हौ सर्व्वक्षुल्लकप्रतरौ तयोरुपरितनस्यचत्वारसंस्थाना अधस्तनस्यापिचत्वारस्तथाभूताएवेत्यं यो
ष्टाकाशप्रदेशात्मकचतुरस्रोरुचकादिशामनुदिशाच प्रभवउत्पत्तिस्थानमितिस्थापनाआसामभिधानान्याहइंदग्गे त्यादिआसामाद्यैद्री
विजयद्वारानुसारेणशेषा. प्रदक्षिणतस्सप्तावसेया ऊर्द्धविमलातमाचाधइति आसामेवस्वरूपनिरूपणायाह दुपएइत्यादि चतस्रोमहा
दिशोद्विप्रदेशाद्याद्विद्विप्रदेशोत्तरवृद्धा विदिशश्चतस्रएकप्रदेशरचनात्मिका अनुत्तराद्द्विरचिता ऊर्द्धाधोदिक्द्वयंत्वनुत्तरासैवचतु प्रदे
शादिरचनात्मकं किञ्चअतोइत्यादिसर्वमित्यन्तर्मध्येसादिकारुचकाद्यादिति अन्तावच्छिन्नलोकाकाशाश्रयणादपर्यवसिता सर्वाश्चाप्य
नन्तप्रदेशात्मिकाभवन्ति सर्वाअपचवंतिकडजुम्मत्ति सर्वासांदिशांप्रत्येकयेप्रदेशास्ते चतुष्क, नापह्रियमाणाश्चतुष्कावशेषाभवन्तीतित
स्मात्तत्प्रदेशात्मिकाच दिशआगमसंज्ञायाकडजुम्मत्तिशब्देनाभिधीयते तथाचागमकइणंभंतेजुम्मापन्नत्ता गोयमाचत्तारिजुम्मापन्नत्ता
तंजहाकडजुम्मे तेचए बायरजुम्मे कलिचए सेकेणट्ठेणंभंतेएववुच्चइ गोयमाजेणंरासीचउक्कगावहारेणं अवहीरमाणा२ चउपज्जव
सिएसियासेणंकडजुम्मे एवंतिपज्जवसिएतेयएगुपज्जवसिए बायरजुम्मे एगपज्जवसिए कलितोगेत्ति पुनरप्यासांसंस्थानमाहसगडुद्धी
त्यादि महादिशश्चतस्रोपिशकटोद्धिसंस्थाना विदिशश्चमुक्तावलिनिभाऊर्द्धाधोदिग्द्वयंरुचकाकारमिति तापदिशमाहजस्सेत्यादिदा
क्षिणेत्यादितापयतीतितापआदित्यास्तदाश्रित्यादितापदिक्षायेषमुगमं केवलदक्षिणपार्श्वोदिश्यपदेशपूर्वाभिमुखस्येतिद्रष्टव्य, ताप
दिगंगीकरणेनान्योपितापदिशाभवतीति प्रसंगताआह जेमंदरस्सेत्यादियेमंदरस्थमेरो पूर्वेणमनुष्याःतेलदिगंगीकरणेन रुचकापेक्षं
पूर्वादिदिक्षुवेदितव्यं तेषामुत्तरोमेरुर्दक्षिणेनलवणइति तापदिगंगीकरणेनशेषस्पष्ट प्रज्ञापकदिशमाह जत्थयइत्यादिप्रज्ञापकोयत्र
क्वचित्स्थित दिशांवाऽन्यस्यचिन्निमित्तंकथयति सयदभिमुखस्तिष्ठति सापूर्वाअष्टतथापरेति निमित्तकथनंचोपलक्षणमन्योपिव्याख्या
ताग्राह्यइति शेषदिकसाधनार्थमाह दाहिणेत्यादिएवाशिमियादि चेडाइत्यादिएवमित्यादिपुव्वाएयादिसानुत्थाणीत्यादिचेट्ठाइत्यादि
एताससगाथा.कथानवरंद्वितीयगाथायां सर्व्वतिर्यग्दिशांवास्य मिड' शरीरोच्छ्रयप्रमाणमिति साम्प्रतमासांसंस्थानमाह सोलसइ
त्यादिषोडशापिदिशतिर्यग्दिश' शकटोद्धिसंस्थानावोद्धव्या प्रज्ञापकप्रदेशेसकटाग्रहिर्विशाला नारकादेवाश्चद्वे एव ऊर्द्धाधोगामिन्यौ
शरीराकारेस्थयत' शिरोमस्तेपादम्तेचसल्पत्वात्मल्लकमुभाकारो गच्छत्योधविशालेभवतइति आसांसर्वासातात्पर्यं यंलकादवसेयत
श्चेदंभावदिग्निरूपणार्थमाह मणुयाइत्यादिमनुष्याश्चतुर्भेदास्तद्यथा समूर्च्छनजाकर्मभूमिजा अकर्म्मभूमिजा' अंतरद्वीपजाश्चेतितथा
तिर्यञ्चोद्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियापंचेन्द्रियाश्चेति चतुर्द्दाकायाःपृथिव्यप्तेजोवायवश्चत्वारस्तथाग्रमूलस्कंधपर्वबीजाश्चत्वारएतेषोडश
देवनारकप्रक्षेपादष्टादशएभिर्भावैर्भवनाज्जीवोव्यपदिश्यतइति भावदिगष्टादशभेदेति अत्रचसामान्यदिग्ग्रहणेपि यस्यादिशिजीवाना
मविगानेनगत्यागतीस्पष्टे सर्वत्रसंभवतस्यैवेहाधिकारइति तामेवनिर्युक्तिकाराआहर्यति भावदिग्भाविनाभाविनीसामर्थ्यादधिगतै
वयतस्तदर्थमाद्यादिशश्चिन्त्यंतमाह पन्नवगेत्यादिपन्नवगदिसाएइत्यादि प्रज्ञापकापेक्षयाअष्टादशभेदादिशोत्रच भावदिशोपिताअष्टप्रमा
णाएवप्रत्येकसंभवंतीत्यत एकैकाप्रज्ञापकदिशाभावदिगष्टादशकेन निघ्नेताडयेदतोष्टादशाष्टादशकास्तेच संख्यायाचतुश्शतानिचतु
विंशत्यधिकानिभवंतीति एतच्चोपलक्षणतापदिगादावपि यथासम्भवमायोजनीयमिति क्षेत्रदिशितुचतस्रएव प्रमादिक्षुसंभवोनविदि
गादिषुतासामेकप्रदेशिकत्वात्द्व्यप्रदेशकत्वाच्चेतिगाथाद्वयार्थः अयंचदिक्संयोगकलाप अशरीरोदिशाओआगओ अहमसीत्यनेन
परिगृहीतस्तुत्रावयवार्थश्चायमिहदिग्ग्रहणात प्रज्ञापकदिशश्चतस्र पूर्वादिकाऊर्द्धादिगधोदिक्परिगृह्यन्ते भावदिशस्त्वष्टादशापिच
शुदिग्ग्रहणात्तुप्रज्ञापकविदिशोष्टादशेति तत्रासञ्ज्ञिनांनैपौववोधोस्तिसञ्ज्ञिनामपिकेषाञ्चिद्भवतिकेषाञ्चिन्नेतियथाहमनुष्यादिशत्तमाग
तइहेतिएवमेगेसिणोणायंभवइत्ति एवमित्यनेनप्रकारेण प्रतिविशिष्टदिग्विदिगागमनं नैकेषांविदितंभवतीत्येतदुपसंहारयाच एतदे
वनिर्युक्तिकृदाह केसिमित्यादि केषां चिज्जीवानां ज्ञानावरणीयक्षायोपशमवतां ज्ञानसंभविकेषांचित्तु तदावृत्तिमतान भवतीति
याद्दग्भूतासंज्ञानभवतितांदर्शयति कोहपरस्मिन् लोकेजन्मनिमनुष्यादिरासं अनेनभावदिग्गृहीता कतरस्यावादिशसमायातइत्य

विशेष तदेवचतुर्विधयामत्याकश्चिदात्मनोविशिष्टदिक्गत्यागतीजानाति कश्चित्परतीर्थकृत्सर्वज्ञस्तस्यैवपरमार्थत'परशब्दवाच्यत्वात् तस्यव्याकरणमुपदेशस्तेनजीवास्तद्भेदांश्च पृथिव्यादीन्गत्यागतीचजानाति अपरपुनरन्येषां तीर्थकरव्यतिरिक्तानामतिशयज्ञानिना मन्तिकेजानातितु तत्सूत्रावयवेनदर्शयति तद्यथापूर्वस्यादिशआगतोऽहमस्मि एवदक्षिणस्या पश्चिमयोत्तरस्या ऊर्ध्वदिशोधोदिशो न्यतरस्यादिशोनुदिशोवागतोऽहमस्मि इत्येवमेकेषांविशिष्टक्षयोपशमादिमतां तीर्थकरान्यातिशयज्ञानबोधितानाच ज्ञातंभवतितथा प्रतिविशिष्टदिगागमनपरिज्ञानानन्तर एतेषांतदपिज्ञानभवतियथास्तिमेस्यशरीरकस्याधिष्ठाताज्ञानदर्शनोपयोगलक्षण उपपादकोभवान्तरसंक्रमतिभाग् असर्वगतोभोक्तामूर्त्तिरहितोविनाशी शरीरमात्रव्यापीत्यादिगुणवानात्मेतितथास्तिममात्मायोमुष्यादिशोनुदिशश्चसकाशादनुसञ्चरतिगतिप्रायोग्यकर्मोपादानादनुपश्चात्संचरतिअनुसञ्चरतिदिग्विदिगागमनभावदिगागमनंवास्मरन्नीत्यर्थ साम्प्रतंसूत्रावयवेनपूर्वसूत्रोक्तमेवार्थमुपसंहरति सर्वस्यादिश सर्वस्याश्चानुदिशोयआगतोऽनुसञ्चरतीतिसोऽहमित्यालोच्येयोऽहंप्रत्ययग्राह्यात्मा दात्मन अनेनचपूर्वोक्त मज्ञापकदिश सर्वाऽप्यष्टादशभावदिशश्चेतिस्वचस्मृत्यादिपरिज्ञानेसुखप्रतिपत्त्यर्थंतयोर्दृष्टांतौप्रदर्श्यतेतद्यथावसन्तपुरेनगरेजितशत्रूराजाधारिणीमहादेवीतयोर्धर्मरुच्यभिधान. सुत सचराजान्यदातापसत्वेन प्रव्रजितुमिच्छुधर्मरुचिंराज्येस्थापयितुमुद्यतोधर्मरुचिनामतोपृष्टा किमितितातोराज्य त्यजति तयोक्तकिमनयाचपलयानरकादिसकलदुःखहेतुभूतया स्वर्गापवर्गमार्गार्गलयापरमार्थतइहलोकेप्यभिमानमात्रफलया अतोविशर्थिनांसकलसुखसाधकधर्मंकर्तुमुत्सहते धर्मरुचिस्तदाकर्ण्योक्तवान् यद्येवं किमेवतातस्यानिष्टार्थेनैवभूता सकलदोषाश्रयणीयामयिनियोजयति सकलकल्याणहेतोधर्मात् प्रत्याखयतित्यभिधायपित्रासहास्तत.सहतापसाश्रममगात् तत्रचसकलातापसक्रियां यथोक्तापालयन्नास्ते अन्यदाचामावास्याया' पूर्वाह्ने एकेनतापसेनोक्तंयथा भोस्तापसाकल्येअनाकुट्टिर्भविता तदद्यैवकुशकुसुमसमित् कंदमूलफलाद्याहरणं क्रियतइत्येतच्चधर्मरुचिनाजनक' पृष्टस्तातकेयमनाकुट्टिनामतेनोक्तपुत्रलतादीनामच्छेदस्य सारिश्चमावस्यादिकेविशिष्टपर्वदिवसेनवर्त्तते सावद्यत्वात्च्छेदनादिक्रियाया' श्रुत्वाचैतदसावचिन्तयत् यदिपुनसर्वथानाकुट्टिस्यात्तदाशोभनंभवेत् एवमध्यवसायिनस्तस्यामावास्यायां तपोवनासन्नपथेनगच्छता साधूनांदर्शनमभूत्तेनचाभिहिताकिमद्यभवतामनाकुट्टिर्नजाता येनाटवींप्रस्थितास्तैरभिहित यथाऽस्माकंयावज्जीवमनाकुट्टिरित्याभिप्रायातिक्रान्तासाधवस्तस्यचतदाकर्ण्य ईहापोहविमर्शेन जातिस्मरणमुत्पन्न यथाऽह जन्मान्तरेप्रव्रज्याकृत्वादेवलोकेसुखमनुभूय इहागतइत्येव तेनविशिष्टदिगागमनस्वमत्याजातिस्मरणरूपयाविज्ञात प्रत्येकबुद्धश्चजातएवंवल्कलचीरिश्चेयासप्रभृतयोतयोज्ञ्याइति परव्याकरणेन्तिउदाहरणगौतमस्वामिनाभगवन्पृष्ट' किमितिमेकेवलज्ञाननोत्पद्यतेभगवताव्याकृतभोगौतमभवतोतीवममोपरिस्नेहोऽस्तिततइत्युक्तोभगवन्नेवमेतत्किंनिमित्त पुनरहोममभगवदुपरिस्नेहस्ततोभगवतातस्यबहुषु भवांतरेषुपूर्वसंबंधसमावेदितचिरसंसिट्ठोसिमेगोयमाचिरपरिचिओसिमेगोयमा इत्येवमादितस्तीर्थकृत् प्रतिपादितमाकर्ण्य गोतमस्वामिनो विशिष्टदिगागमनादिविज्ञानमभूदितिअन्यश्रवणेविदमुदाहरणं श्रीमल्लिस्वामिनायषांराजपुत्राणांयथा उद्दायार्थमागतानाअवधि ज्ञानेनतत्प्रतिबोधार्थंयथाजन्मातरेसहितैरेवप्रव्रज्याकृता यथाचतत्फलदेवलोकेजयंताभिधाने विमानेऽनुभूत तथाख्यातंतच्चाकर्ण्य लघुकर्मत्वात्प्रतिबुद्धाविशिष्टदिगागमनविज्ञानत्व सजात साम्प्रतप्रकृतमनुश्रियते योऽहसोऽहमित्यनेनालोच्येषनपूर्वादिश आगतमात्मान मविच्छिन्नसंततिपतितंद्रव्यार्थतयानित्य पर्यायतया अनित्य जानाति सपरमार्थतयात्मवादीतिसूत्रसङ्क्षेपयतिसे आयावादीलोगावादीकम्मावादी किरियावादीय

शीलगाचार्यकृतटीका

नेनतुप्रज्ञापकदिगुपात्तेति यथाकश्चिन्मदिरामदघूर्णितलोललोचनो अव्यक्तमनोविज्ञानो रथ्यामार्गेनिपतितस्वच्छन्दोत्कटश्वगणापलिह्यमानवदनो गृहमानीतो मदात्ययेन जानातिकुतोऽहमागतइति तथाप्रकृतो मनुष्यादिरपीतिगाथार्थ न केवलमेषैव संज्ञानास्त्यपरापि नास्तीतिसूत्रसदाह अत्थिमे आयाउववाइए नत्थिमे आयाउववाइएके अह आसीकेवाइओचुए इहपेच्चाभविस्सा

स्थापनाविधिइं महाव्रतनो आरोपणकरिवो इतिश्रीमद्बृहत्तपागच्छेय॰ श्रीसाधुरत्नशिष्य उपाध्यायपार्श्वचन्द्रविरचिते श्रीआचारां गप्रथमश्रुतस्कंधसुत्रायग्रोधे शस्त्रपरिज्ञाध्ययने संपूर्ण एतलेप्रथमाध्ययनकह्यु, हिवेबीजो अध्ययनप्रारंभियेछे तेहनोएसबंधजाणिवो जिणिकारणिप्रथमाध्ययनि छज्जीवनिकाय स्वरूपबोल्युं तेसांभली यथार्थसद्दही उत्पन्नवैराग्यपणे प्रतिपन्नपंचमहाव्रत एहवासाधु नेजिणिपरें शब्दादिविषयरूपलोक अथवारागादिकषायलोकनो जीपिवोहुइ तेअधिकारकह्या भणीबीजोलोकविजयाध्ययनकहि येछे तिहांउद्देशा६ जाणिवा तिहांपहिलेउद्देशकि चारित्रियेस्वजननो स्नेहटालिवो एहवो अधिकारछे बीजेउद्देशकि संयमनेविषे अदृढपणोनकरिवो एहवोअधिकारछे त्रीजेउद्देशकिजातिकुल बुद्धिचारित्रिये माननकरिवो एहवोभावछे चोथे उद्देशकिभोगनेविषे परिचयनकरिवो एहवोअर्थछे पांचमेउद्देशकिचारित्रियें संयमदेहप्रतिपालिवाभणी लोकनीनिश्राइं विचरिवो एहवोअधिकारछे छट्ठेउद्देशकिलोकनी निश्राइं विचरतेचारित्रिये ममताभावनकरिवो एहवो अधिकारछे हिवेबीजे अध्ययनिपहिलो उद्देशोविवरि येछे सूत्रजेगुणेक॰ योगुणःशब्दरूपरसगन्धस्पर्शादिकसे मूलस्थान मूलकारणंसंसारस्य कषायास्तेषांस्थान ततश्च शब्दादिकोगुण' एवमूलस्थानमिति संसारस्याद्यं प्रधानकारणं यतोमनोज्ञेतरशब्दाद्युपलब्धौ कषायस्ततोपिससारइति सांप्रतमनयोरेव बीजांकुर न्यायेनपरस्परत कार्यकारणभाव दर्शयति जेमूलयदेवसंसारमूलानां कषायाणां स्थानमाश्रय सशब्दादिकोगुणएवनामर अर्थः जेगुणकहता शब्दरूपरसगन्धस्पर्शविषयतेमूलट्ठाणेकहतामूलनिमित्तकारण एतावतासंसारमोतेस्यु कषायतेहनोस्थानकहताआश्रय एतावता जेविषयतेकषायनोकारण अनेजेमूलस्थान कषायनो आश्रयतेगुणशब्दादिविषयजाणियो एतलेस्यु भावसंसारमांहिइष्टा निष्टशब्दसांभलीजीवने कषायजपजेराग अथवाद्वेषथाये तिहांयकी संसारवाधे इणिकारणिजेगुणा तेमूलस्थान अनेजेमूलस्थान तेगुणजेइमतो किस्युं तेकहेछे एवइतिसेगुक॰ इतिहेतोर्यस्माच्छब्दादिगुणषामात्मा कषायस्थानेवर्ततेअन्यत्रसर्वोपि प्राणीगुणार्थी गुणानुरागी अतस्तेषांगुणानामप्राप्तौ प्राप्तिविनाशेवाकांक्षाशोकाभ्या समाणीमहतापरितापेन पराभूत.सन् प्रमत्तः प्रमादवान्भव तिप्रमादश्च रागद्वेषात्मकोनादिभवाभ्यासान्माता पित्रादिविषयोभवतीति दर्शयतिमायामेक॰ मातामेइतिमातृविषयोरागस्तदुपकारि णिचद्वेष, एवंपितामेपितृविषयोराग, एवंभगिनीमेभार्यामेसुता' पुत्रामेधूयाइति पुत्रीमेसुण्हाइतिस्नु पावधूमेपुत्रपत्नीत्यर्थ, सखि स्वजनसग्रथसस्तुतामेतत्रसखामित्र स्वजनःपितृव्यादिसग्रंथ स्वजनस्यापिस्वजन सस्तुतोभूयो भूयोदर्शनालापादिनापरिचित तन्नि मित्तोराग तत परितप्यते तथाविविक्त शोभनंप्रचुरंवा उपकरणहयगजरथासनमंचकादि परिवर्त्तन द्विगुणत्रिगुणादिभेदतदेवनि मित्तोराग तत'परितप्यते तथाविविक्तं शोभनप्रचुरंवा उपकरणंहयगजरथासन मंचकादिपरिवर्त्तनं द्विगुणत्रिगुणादिभेदं तदेव भोजनमोदकादि आच्छादनंवस्त्रादि तन्नमेइतिरागवान् इत्येवमर्थंस्तद्योलोक: तेष्वेवमातापितादिषु प्रमत्त सन् ममेदंअहमस्यस्वा मीतिप्रमत्त आमरणान्तंवसेन्निष्टेत् तदेवरागद्वेषपरिकल्पित अहश्चदिनराउयरातिश्च शब्दात्पक्षमासश्च निष्टत्तशुभाध्यवसाय, परितप्यमानस्तिष्ठति यत कइयावत्त इसव्योकिभड कलविन्सियाभूमी कोकयविक्रयकालोनिल्पिसइं किकहिकेण १ सचपरितप्य मान' किंभूतोभवतीत्याह कालाकालसमुट्ठाई कार्यकरणावसरे यालमकालश्च नगणयतीत्यर्थ. तत्किमर्थनगणयतितदाह संजोगट्ठी सयोगी धनधान्यहिरण्य द्विपदचतु पद राज्यभार्यादयस्तदर्थी तथाअट्ठालोभी अर्थोद्रव्यन्तस्य समताल्लोभीलुब्ध एवंविधश्च कीदृशो भवति आलुपेसहितोभाभिभूत, कदणारद्वितोगसच्छेदनादिकरणत्वादालुपउच्यते तथासहसाकारे अनालोचितकर्त्ता तथाविनिविष्ट चित्त नानाप्रकारस्थाने स्वजनधनोपार्जनादौ निविष्टचित्तइति सचेदृश,किंकरोतीत्याह एत्थन्तिश्चपृथिवीकायादि जीवेषुपुन पुन. शस्त्रे तदुपघातकारिणि प्रवर्त्ततेइत्यर्थ इणिकारणिशब्दादिविषयवन्त कषायस्थानिवर्त्ते प्राइइसर्वप्राणीगुणार्थी गुणनेविषेरागी इहांगुणविषयलेवा तेहनेविषेरागी तेतेहनीअप्राप्ति अथवालाधाने विनाशिवाछा अनेशोके करी महापरितापिकेशिइ करीप्रम त्ततोवर्त्ते हिवे प्रमादरागद्वेषात्मकछे तेरागप्रादुषि मातापितादिविषयप्रवर्त्ते तेकहेछे तेजीवइमजाणे मम्हामाहरी एहवोराग

मातानेहेति क्षपणे तेइनाथपकारीनेविषे द्वेषपुणऊपजे तेरागद्वेषनोवाह्यो अनेकसावद्यानुष्ठानमेषे एवपितामाहरो भाईमा हरो तथाबहिनिमाहरी भार्यास्त्रीमाहरी पुत्रमाहरादीकरीमाहरी बहूमाहरी सषाकहताभित्रमाहरो स्वजनपीतरियाप्रमुखते माहरा सग्रथकहता स्वजननातेस्वजन तथासथुयाकहता जेहसुश्वणोदर्शनि आलामिपरिचययाइ एसर्वमाहरा एतलेतेहने

दीपिकाटीका

र्थंसमारभेज्जा णेवणे हिछज्जीवनिकायसत्थ समारभावेज्जाणेवणे हिछज्जीवनिकायसत्थसमारभंतेसमणुजाणेज्जाजस्से तेछज्जीवनिका यसत्थसमारभापरिन्नायाभवतिसेहुमुणीपरिन्नायकम्मे त्तिबेमिइतिसत्थपरिन्नाएसत्तमोउद्देसोसम्मत्तोतपरिज्ञायत्तितत्पामपटादयथा मदि सर्वतोज्ञात्वामेधावीमर्यादावान्नैवस्वयषट्जीवनिकायशस्त्रं परकायशस्त्रादिभेदंसमारभतेनैवान्यै.समारंभयेत्नचान्यान्समार भमाणानृसमनुजानीयात्एवयस्य तेसुपरीक्ष्यकारिणः षट्जीवनिकायशस्त्रसमारभा परिज्ञाता ज्ञपरिज्ञयाप्रत्याख्यानपरिज्ञयाचसए वमुनिप्रत्याख्यातकर्मत्वात्इतिशब्दोऽध्ययनसमाप्त्यर्थं. ब्रवीमितिसुधर्मस्वाम्याहस्वमनीषिकाव्याहत्तयेश्रीवर्द्धमानस्वामिनउपदेशात्स र्वंमाख्यातमयेतिइदंचाध्ययनंसाधुनाय दाधीतभवतिपर्यंतचशिष्यकेणापष्टंभवतितदाशोपस्थापनाविधिनामहाव्रतारोपणाकार्यमि तिइतिश्रीहत्खरतरगच्छराजाधिराजश्रीजिनसमुद्रसूरिपट्टालंकारश्रीजिनजिनहंससूरिविरचितायाआचारांगप्रदीपिकायाहत्तौ श्रीशस्त्रपरिज्ञाध्ययनसमाप्तं उक्तप्रथमाध्ययनसांप्रतद्वितीयमारभ्यते अस्यचायमभिसंबंध अधिगतशस्त्रपरिज्ञासूत्रार्थस्य तत्प्रतिपा दितैकेंद्रियादिप्रदृश्यमानस्य सम्यक्तद्रव्यपरिणामवत तद्योग्यपतयारोपितमहाव्रत भारस्यसाधोर्वैराग्यरागादिकषायलोकस्यशब्दादिवि षयलोकस्यवाविजयोभवति तथाऽनेनाध्ययनेन प्रतिपाद्यते अस्योद्देशार्थाधिकारोयथा तत्रप्रथमोद्देशकेस्वजनेमातापितादिकेअभिष्व गोनकार्यइत्यर्थाधिकार द्वितीयोद्देशकेअदृढत्वसंयमेनकार्यमिति तृतीयेजात्याद्युपेतेनाभिमानोकार्यइति चतुर्थेभोगेष्वभिष्व गोन कार्यइति पंचमेतुत्यक्तस्वजनादिनापि साधुनासंयमदेहप्रतिपालनाय लोकनिश्रयाविहर्त्तव्यमिति षष्ठोद्देशकेतुलोकनिश्रयाविहरि तापिसाधुनालोकेममत्वनकार्यइत्युद्देशार्थाधिकार नामनिष्पन्नेनिक्षेपेलोकविजयइति अध्ययननामसूत्रानुगमेऽस्खलितादिगुणोपेत सूत्रमुच्चारणीय तच्चेदजेगुणेसेमूलट्ठाणेजेमूलट्ठाणेसेगुणेयोगुणःगुण्यतेभिद्यतेविशिष्यतेऽनेनद्रव्यमितिगुण सचेहशब्दरूपरसगन्धस्प र्शादिक सम्मूलनिमित्त कारणप्रत्ययइतिपर्याया.तिष्ठतिअधिश्वितिस्थानं यएवशब्दादिक कामगुण सएवस सारस्यनारकतिर्यग्नरामर सदृतिलक्षणस्य यन्मूलकारणं कषायास्तेषांस्थानमाश्रयोवर्त्तते यथात्मनोऽभीष्टशब्दाद्युपलब्धौकषाय ततोपिसंसारइतितथयएषश ब्दादिकोगुण सएवमूलस्थानसंसारस्याद्य प्रधानंकारणसांप्रतं अनयोरेवनियमस्यनियामकभाव दर्शयन्नद्युपात्तानांविषयकषायादी नांबीजांकुरन्यायेनपरस्परत कार्यकारणभाव सूत्रेणैवदर्शयति जेमूलट्ठाणेसेगुणेत्ति यदेवसंसारमूलानांकषायानांस्थानमाश्रय श ब्दादिकोगुणोऽप्यसावेव तत किमित्याह इतिसेगुणट्ठीमहयापरितावेण वसेपमत्तेतंजहा मायामेपियामेभगिणीमे भज्जामेपुत्तामेधू यामेसुण्हामेसहिसयणसंगथसंथुयामे विचित्तोपकरणपरियट्टण भोयणाच्छायणमेइच्चत्थं गढिएलोएवसेपमत्ते अहोयराओपरित प्पमाणेकालाकालसमुट्ठायी संजोगट्ठीअट्ठालोभी आलुंपेसहसाकारे विणिविट्ठचित्ते एत्यसत्थे पुणोपुणोइतिसेगुणट्ठीति इतिहेतोर्यं स्मात्शब्दादिगुणापरीत आत्माकषायमूलस्थानेवर्त्तते तस्मात्सोपिप्राणीगुणार्थी गुणप्रयोजनीगुणानुरागीचततसोगुणानामप्राप्तौप्रा प्तिविनाशेवाआक्रंदशोकाभ्यां महतापरितापेन शारीरमानसस्वभावेन दु खेनाभिभूत सन् प्रमत्त.प्रमादश्चरागद्वेषात्मकोद्वेष श्चप्रायोनरागविनारागोपि चात्मसं सारभ्याऽनादिभवाभ्यासात् मातापित्रादिविषयोभवतीतिदर्शयति मायामेतत्रमातृविषयोराग.सं सारस्वभावादुपकारकत्वाद्वोपजायते रागेचसतिमदीयामाताक्षुत्पिपासादिका वेदनांमाप्राप्तइत्यत सचित्ताचित्तसेवादिकांप्राण्यु पघातरूपांक्रियामारभते तदुपघातकारिणिपुरुषादौ तस्यांवाकार्यमप्रवृत्तायां द्वेषउपजायतेतद्यथाऽनन्तवीर्यप्रसक्तायांरेणुकायांरामस्ये तिएवपितामेपितृनिमित्तं रागद्वेषौ भवतोयथारामस्यपितरिरागात्तदुपघातरिच द्वेषात्सप्तकृत्व: क्षत्रियाव्यापादिता सुभूमेनापिक्षि

स्वस्त्रात्वा ब्राह्मणाध्यापादिता इति भगिनीनिमित्तं न च क्लेशमनुभवति प्राणी तथा भार्यानिमित्तं रागद्वेषोद्भव यथा चाणक्येन भगिनी पत्याद्यमत्त्यातया भार्यया प्रेरितेन नंदान्तिकं द्रव्यार्थमुपगतेन कोपान्नंदकुलक्षय निन्ये तथा पुत्रा मेन जीवतीत्यारम्भे प्रवर्त्तते एवं दुहिता मे दुःखिनीति रागद्वेषोपहतचेताः परमार्थमजानानस्तद्धितक्ते येनैहिकामुष्मिकानपायानवाप्नोति यथा जरासंधो जामातरि कंसे व्यापादिते सबलोऽबले पादपस्मृतवासुदेव पदानुसारी सबलवाहनः क्षयमागात् स्नुषा मे न जीवतीत्यारम्भे प्रवर्त्तते सखिस्वजनसग्रन्थसंस्तुता मे स्युरिति स्वजनः पितृव्यादि, सग्रंथ, स्वजनस्यापि स्वजन' पितृव्यपुत्रश्यालकादि संस्तुतो भूयोदर्शनेन परिचितः अथवा पूर्वसंस्तुतो मातापित्रादिरभिहित, पश्चात्संस्तुतः श्यालकादिः सदृशात्व(?). स च मे दुःखित' इति परितप्यते विविक्तोपकरणानि विविक्तं शो

शीलंगाचार्यकृतटीका

दंपरि'समंतात् ज्ञात्वा मेधावी मर्यादावान्नैव स्वयं षट्जीवनिकायशस्त्रं स्वकायपरकायादिभेदं समारभेत नैवान्यैः समारंभयेत् न चान्यान्समारभमाणान् समनुजानीयात् एवं यस्यैते सुपरीक्ष्यकारिण' षट्जीवनिकाय शस्त्रसमारम्भाः तद्विषयाः पापकर्म विशेषा परिज्ञाता ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च स एव मुनिः प्रत्याख्यातकर्मा स्यात् प्रत्याख्याताशेषपापागमत्वात् तदन्यैर्थं विप्रमुक्त इति इतिशब्दोध्ययनपरिसमाप्तिप्रदर्शनार्थ ब्रवीमीति सुधर्मस्वाम्याह स्वमनीषिकाव्यावृत्तये भगवतोपनीतघनघातिकर्म चतुष्टयस्य समासादिताशेषपदार्थाविर्भावकदिव्यज्ञानस्य प्रणताशेषगीर्वाणाधिपतेश्चतुस्त्रिंशदतिशयसमन्वितस्य श्रीवर्द्धमानस्वामिन उपदेशात् सर्वमेतदाख्यातवानिति कार्त्स्न्येनेति उक्तः सूत्रानुगमः निक्षेपश्च सूत्रस्पर्शिनिर्युक्तिः सम्प्रति नयाः नैगमादयस्ते चान्यत्र सुविचारिताः संक्षेपतस्तु सर्वेऽपि तेद्वैधा भवन्ति ज्ञाननयाश्चरणनयाश्च तत्र ज्ञाननयाः ज्ञानमेव प्रधानं मोक्षसाधकमित्यध्यवस्यन्ति हिताहितप्राप्तिपरिहारकारित्वात् ज्ञानस्य तद्रूपैकसकलतु प्रत्यक्षाज्ज्ञानमेव न तु क्रियाचरणनयास्तु चरणस्य प्राधान्यमभिदधति अन्वयव्यतिरेकसमधिगम्यत्वात्सकलपदार्थानां तथाहि सत्यपि ज्ञाने सकलवस्तुग्राहिणि समुत्थितेन चरणमन्तरेणभवधारणीय कर्मोच्छेदस्तदनुच्छेदाच्च मोक्षालाभस्तस्माच्च ज्ञानं प्रधानं चरणे पुन'सति सर्वमुत्तरगुणाख्योऽघातिकर्मोच्छेदस्तदुच्छेदात् केवलावबोधिप्राप्तिस्तत्र यथाख्यातचारित्रवर्त्तिकृत्वा लाकालापमतापिते सकलकर्मकच्छेदस्तदुच्छेदादव्याबाधसुखलक्षणमोक्षावाप्तिरिति तस्माच्चरणं प्रधानमित्यध्यवसाम: अत्रोच्यते उभयमप्येतन्मिथ्यादर्शनं यतउक्तं हयनाणकियाहीणं हयाअन्नाणओकिया पासंतो पंगुलो दड्ढो धावमाणो य अंधओ तद्देवं सर्वेऽपि नया'परस्परनिरपेक्षामिथ्यात्वरूपतया न सम्यग्भावमनुभवन्ति समुदितास्तु यथावस्थितार्थप्रतिपादनेन सम्यक्त्वभवन्तीत्युक्तं एव सव्वेवियामिच्छादिट्ठी सपक्खपडिबद्धा अन्नोन्ननिस्सिया उण हवंति तेचेवसम्मत्त तस्मादुभयपरस्परसापेक्षमोक्षप्राप्तये अलमित्यर्थं ज्ञानचरणेवेति निर्दोष, अत्र पर इतिप्रत्यवस्थित तथाचोभयप्राधान्यादिदर्शयिषयाह सव्वेसिंपि णयाणं बहुविहवत्तव्वयं णिसामेत्ता तं सव्वणयविसुद्धं जं चरणगुणट्ठिओ साहू चरणं च गुणश्च चरणगुणौ तयोः स्थितश्चरणगुणस्थित' गुणग्रहणोपादानात् ज्ञानमेव परिगृह्यते यतोऽनकदाचिदात्मनो गुणिनस्तेन ज्ञानाख्येन गुणेन वियोगोऽस्ति ततोऽसौ सहभावी गुण अतोऽनेकविधवक्तव्यं नयमार्गमवधार्यापि संक्षेपात् ज्ञानचरणयोरेवस्यात्तथ्यमिति निश्चयो विदुषोऽनवाभिलषितप्राप्तिः केवलेन चरणेन ज्ञानहीनत्वात् अधमिक्रियाप्रतिविशिष्टप्रदेशप्राप्तिवत् न च ज्ञानमात्रेणाभीष्टप्राप्ति क्रियाहीनत्वात् चक्षुष्मतसमन्वित पङ्गुपुरुषवत् दग्धनगरमध्यव्यवस्थित यथावस्थितदर्शिज्ञानवत्तस्मादुभयप्रधाननगरदाहनिर्गमे पंग्वंधसंयोग क्रियाज्ञानवत् एवमिदमाचारांगसद्देहभूत प्रथमाध्ययनं षट्जीवनिकायस्वरूपरक्षणोपायगर्भमादिमध्यावसानेषु ऐकैकसमेकान्तहितापत्तिकारि मुमुक्षुणा यदाधीतं भवति सूत्रत' शिष्यकेणार्थतश्चावगतं भवति श्रद्धानसंवेगाभ्यां च यदा भावितं भवति ततोऽस्य महाव्रतारोपणमुपस्थापनं परीक्ष्य निशीथाद्यभिहितक्रमेण सचित्तपृथिवीमध्यगमनादिना श्रद्धानसंपन्नं यथाविधि कार्यमिह पुनरुपस्थापने विधिरित्यालोच्यते शोभनेषु तिथिकरणनक्षत्रमुहूर्तेषु द्रव्यक्षेत्रभावेषु च भगवतां प्रतिकृतीरभिवन्द्यमहं मामाभिस्तुतिभिरथ पादपतितोऽस्य सूरि, सहशिष्येण महाव्रतारोपणमत्ययं कायोत्सर्गमुत्थाय एकैकमहाव्रतमादितआरभ्य,

लिङ्गधारयेद्यावच्चिरिभुक्तिविरतिरविकलाखिलचारिता पश्चादिदंतिचारितव्य इच्चं इयाइं पंचमहव्वयाइं राईं भोयणवेरमणछट्ठाइं अत्तहियट्ठयाएउवसंपज्जित्ताणंविहरामि पश्चाद्वन्दनकंदत्वोत्थितोभिधत्तो यथनतागयति संदिशतकिंभणामीतिभणति सूरिः प्रात्याह्वदित्याभिधत्सेत्यं यथुक्तोभिवन्द्योत्थितोभणाति युष्माभिर्ममभवताव्यारोपितानीच्छाम्यनुशिष्टिमित्याचार्योऽपि प्रतिगदितिनिस्तारकपारगोभवाचार्यगुणैर्वृद्ध स्ववचनविरति समनंतरंच सुरभिवासचूर्णमुष्टिंच शिष्यस्यशिरसिकिरतिपश्चाद्वंदनकंदत्वाप्रदक्षिणीकरोत्याचार्यंनमस्कारमावर्त्तयन्पुनरपिवंदतेतथैवचकरोतिसकलक्रियानुष्ठानं एवंत्रिप्रदक्षिणीकृत्यविरमतिशिष्य.शेषा साधवश्चास्मै युगपद्वास. मुष्टिं विमुञ्चन्तिसुरभिपरिमलायतिअनसुलभकेसरायिषपश्चात्कारितकायोत्सर्गं सूरिरभिदधातिगणसवकोटिका स्थानीयकुलवैराख्यायाखा अमुकाभिधान आचार्यउपाध्यायश्च साधा.प्रवर्त्तिनी तृतीयोद्देश्यायथासन्न चोपस्थाप्यमानारत्नाधिकाभवन्तिपश्चादाचाम्लं निर्विकृतिकंवास्मगच्छसंततिसमायातमाचरन्तीत्ये व मेतदध्ययनमादिमध्यांतकल्याणकलापयोगिभव्यजनतामन.समाधानायाविप्रियविप्रयोगादि दु:खावर्त्तबहुलकषाय झषादिकुलाकुलविषम संसृतसरित्तारणसमर्थंममखदयैक रसमसकृदभ्यसितव्यसुमुक्षुणेति आचार्यश्रीशीलांकविरचिता शस्त्रपरिज्ञाध्ययनटीकासमाप्तेति ग्रन्थाग्रंश्लोक१३२१ नम:श्रीवर्द्धमानायवर्द्धमानायपर्य्यये यन्नाचारप्रपञ्चाय नि प्रपञ्चायतायिने शस्त्रपरिविवरणमतिगहनमितीव किलहतपूज्यै श्रीगन्धहस्तिमिश्रैर्विवृणोमि ततोऽहमविशिष्ट उक्तप्रथमाध्ययनं सांप्रतद्वितीयमारभ्यते अस्यचायमभिसम्बन्ध इहचिन्मिथ्यात्वोपशमक्षयक्षयोपशमान्यतरावाप्त सम्यग्दर्शनस्यामकार्यस्यात्यन्तिकैकान्तिकानाबाधपरमानन्दसुखस्यानाचरण ज्ञानदर्शनलक्षणलक्षित मोक्षकारणस्याश्रवनिरोध निर्जराक्षपस्यमूलोत्तरगुणभेदभिन्नस्यच चारित्रास्यापराशेय प्रतष्टतिकल्पनिष्पादित नि:प्रत्यूहसकलप्राणिगण सघट्टनपरितापनापद्रावणनिवृत्तिरूपस्य संसिद्धये मरणाभावप्रसंगाद्भूत गुणाप्रधर्म ज्ञानोपलब्धेर्धर्मस्यप्रमत निराशेनसामान्यतो जीवास्तित्वप्रतिपाद्य विशेषतश्चपृथ्व्यादिमत निराशेनैकेन्द्रियावनियनामश्च पवनवनस्पतिभेदांश्च जीवान्प्रकटा यथाश्मंसमानजातीयाङ्कुराद्युभेद दर्शनाद्दर्शोमाशाङ्कुरवत् अधिकृतभूमि खननोपलब्धेर्म ण्डूकवत् विशिष्टाहारोपचयापचय शरीराभिवृद्धिव्याप्य व्यतिरेकप्रतेर्भकशरीरवत् अपरप्रेरितामतिश्चता नियततिरश्चिनिगमनात्प्रवालादिवत् सालतरुनूपुरालङ्कार कामिनीचरणताडन विकाराधिगते कामुकवदित्यादिभि: प्रयोगैस्तयोश्च . शिरच्छायाश्चछन्मणादर द्विविधत्रसद्वीन्द्रिय संज्ञीतरपर्याप्तक अपर्याप्तकभेदांश्च प्रदर्श्य शस्त्रस्वस्वकायपरकायभेदभिन्नं तद्वधेषच विरतिप्रतिपाद्य पुनरपितदेवचारित्रं यथास्पष्टं भावमनुभवति तथानेनाध्ययनेनोपदिश्यते तथाह्यधिगतशस्त्रपरिज्ञा सूत्रार्थस्यतत्प्रतिपादितैकेन्द्रिय पृथिवीकायादिरक्षणस्य सम्यक्तद्रक्षापरिणामवत सर्वोपाधिशुद्धस्य तद्योगतयारोपितपञ्चमहाव्रतभारस्य साधोर्यथारागादि कषायलोकस्य शब्दादिविषयलोकस्यवा विजयोभवति तथानेनाध्ययनेन प्रतिपाद्यते तथाचनिर्युक्तिकारेणाध्ययनार्थाधिकार शस्त्रपरिज्ञायां प्राग्निर्दिष्टोलोको जहबज्झइजहवत विजहियव्वन्तीत्यनेन सम्बन्धेनायात तस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणिभवंति तत्रसूत्रार्थकथन मनुयोगस्तस्य द्वाराणितथा व्याख्यागानीत्यर्थ तानिचोपक्रमादीनि तत्रोपक्रमोद्विधा शास्त्रानुगत शास्त्रीय लोकानुगतोलौकिक इतिनिक्षेपस्त्रिधा ओघनामसूत्रालापक निष्पन्नभेदात् अनुगमोद्विधासूत्रानुगमोनिर्युक्त्यनुगमश्चनया नैगमादयस्तत्रशास्त्रीयोपक्रमांत गतोर्थाधिकारोद्विधाध्ययनार्थाधिकार उद्देशार्थाधिकारोध्ययन सम्बंधश्चस्त्रपरिज्ञायां प्रागेवनिरदेशि उद्देशार्थाधिकारंतु स्वयमेवनिर्युक्तिकार प्रविकटयिषुराह सयणेत्तिगाथा तत्रप्रथमोद्देशकार्थाधिकार स्वजनेमातापित्रादिके अभिष्वङ्गोऽधिगत सूत्रार्थेननकार्यइत्यध्याहार. तथाचसूत्रं मायामेपियामे इत्यादिश्चदढत्तं पीयगमित्ति द्वितीयउद्देशके अदृढत्वंसयमेनकार्यमिति संबध: शेषविषयकषाया दायदढत्वं कार्यमिति वक्ष्यतिच अरइंआउट्टे सेप्रावीत्तृतीयउद्देशकेमाणोयअत्यसारोयत्ति जात्याद्युपेतेनसाधुना कर्मवशाद्विचित्रतामवगम्य सर्वमदस्थानानां मनोनकार्य. आह्चकेगोयावादीकेमाणावादीत्यादि अर्थसारश्च निस्सारतायस्य ते तथाचतिविवेचन ॥ ॥८ चतुर्थेतुभोगेसुत्ति भोगे

प्वभिष्व गोन कार्यइतिशेष यतोभोगिनामपायान् वक्ष्यति सूत्रश्चत्रीभिलोए पव्वहिपश्चमेतु लोकणिस्साएत्ति त्यक्तव्यञ्जन धनमान भोगेनापि साधुनासंयमदेह प्रतिपालनायस्वार्थारंभ प्रवृत्तलोकनिश्रया विहर्त्तव्यमिति शेषस्तथाचसूत्रं समुट्ठिएअणगारे इत्यादि जावपरिव्वए षष्ठोद्देशकेतुलोए ममत्ति्रयाचेव लोकनिश्रयापि विहरतासाधुना तस्मिन्लोके पूर्वापरसंस्तुते संस्तुतेचनममत्वं कार्यं पङ्कजवत्तदाधारस्वभावा नभिष्व गिणाभाव्य मितितथाचसूत्रं जेममाइयमइंजहाति ममातियंगाथातात्पर्यार्थ. नामनिष्पन्ने तुनिक्षेपेलोकविजयइति द्विपदनामतत्रलोकविजययोर्निक्षेप कार्यं सूत्रालापकनिष्पन्ने चनिक्षेपेयानिनिक्षेपार्हाणिसूत्रपदानितेषाञ्चनिक्षेप कार्यं.सूत्रपदोपन्यसामूलशब्दस्यचकषायाभिधायकत्वात्कथायाश्चनिक्षेपव्याख्यातदेवंनामनिष्पन्न भविष्यत्सूत्रालापकनिष्पन्ननिक्षेपोपक्षिप्त सामर्थ्यायातचयन्निक्षेप्तव्य तन्निर्युक्तिकारोगाथया संपिण्डाचष्टे लोगस्सयगाहाकव्वाणवरजंमलागचससारइति यन्मूलक संसारस्तस्यच मूलनिक्षेपःकार्यं. तत्रमूलकषाया यतोनारकतिर्यग्नरा मरगतिस्तन्यस्यागर्भनिषेक कललार्बुद मांसपेश्यादि जन्मजरामरणशरणशात्यस्य दारिद्र्याद्यनेक व्यसनोपनिपातपलगहनस्य प्रियविप्रयोगार्थनाशानेकव्याधिशतपुष्पोपचितस्य शारीरमानसोपचित् तीव्रतरदु:खोपनिपातफलस्य ससारतरोर्मूलमाद्य कारणंकषाया कष ससारस्तस्याया इतित्वात्तदेवमाध्यत्रनामनिष्पन्ने यानिच सूत्रालापकनिष्पन्ने निक्षेप्तव्यपदानिसंभवन्तितानिनिर्युक्तिकार सुहृद्भूत्वाविवेकेनाचष्टेलोगोत्तियविजओत्तियगाहाकव्वातत्रयथोद्देशकथानिर्देशइति न्यायाल्लोकविजययोर्निक्षेपमाहलोगस्सेयगाहातत्रलोकतइतिलोक,लोक्यदर्शनइत्यस्माद्धातो रकर्तरिचकारके संज्ञायामिति घञ् सचधर्माधर्मास्तिकाय व्यवस्थिन्नमशेष द्रव्याधारं वैशाखस्थानस्थ कटिन्यस्तकरयुग्म पुरुषोपलक्षित माकाशखण्डं पञ्चास्तिकायात्मकोवेत्ति तस्यनिक्षेपो घष्टधानामस्थापना द्रव्यक्षेत्रकाल भवभावपर्यवभेदात् छव्विहोविजयखल्वि विजयोऽभिभवः पराजयइति पर्यायास्तस्यनिक्षेप षड्विधोवक्ष्यते तत्राष्टप्रकारेलोकेयेनात्राधिकारस्तमाहभावेकसायलोगोत्ति भावलोकेनात्राधिकार सचभाव षट्प्रकारऔदयिकादिस्तत्राप्यौदयिक भावकषाय लोकेनाधिकारस्तन्मूलत्वात् संसारस्ययद्येवंततः किमतआह अहिगारोतस्सविजयेणंति अधिकारोप्यामारस्यौदयि कषायलोकस्यविजयेनेति गाथार्थं तत्रलोकोऽष्टधानिक्षेपार्थं प्रागुद्देशविजयश्च षोढातन्निक्षेपार्थमाह लोगोभणिओ गाहानपराजये तत्रलोकचतुर्विंशति स्तवेविस्तरतोभिहित' मतुचमेयंवाचो युक्तिलोकचतुर्विंशतिस्तवेऽभिहितइति किमत्रानुपपन्नमुच्यते इहशापूर्वकरण प्रक्रमाधिरूढक्षपक श्रेणिध्यानाग्नि दग्धघातिकर्मं घनोत्पन्नानिरावरणज्ञानेनविपश्यमान तीर्थकरनामाविर्भूत चतुस्त्रिंशदतिशयोपेतेन श्रीवर्द्धमानस्वामिना हेयोपादेयार्थाविर्भावनाय देवमनुजायापर्षदाचारार्थोऽभाषे गणधरैश्च मन्दमतिभिरचिन्त्य शक्त्युपेतैर्गौतमादिभि प्रवचनार्थंमथेपास्तु भद्रुपकारयेसएवा चारागतयादङ्गभे आवश्यकान्तभूतचतुर्विंशतिस्तवे नातिदिश्यइति कश्चित्सुकुमारमतिरत्राह नैषदोषोयतो भद्रबाहुस्वामिनाय मतिदेशोऽभ्यधायि सचपूर्वंमवश्यकनिर्युक्तिविधाय पश्चादाचारागनिर्युक्तिंचक्रे तथाचोक्तं आवश्यकस्यदसकालियस्सतहउत्तरज्झयमायारस्ति सूत्र विजयस्यतुनिक्षेप नामस्थापनेसुगमत्वादनादृत्य द्रव्यादिकमाह दव्वंखेत्तमित्यादिना द्रव्यविजयोव्यतिरिक्तो द्रव्यं यद्द्रव्यात्द्रव्येवाविजयः कटुतिक्तकषायादिना श्लेष्मादेर्वं पतिमल्लादेर्वा क्षेत्रविजय षट्खण्डभरतादेर्यस्मिन् क्षेत्रविजय प्ररूप्यतेकालविजयइति कालेनविजयोयथा षष्टिभिर्वर्षसहस्रैर्भरतेन जितभरतकालस्य प्राधान्यात्तत्कर्मणिवा मासोपनेनजितइति तस्मिन्वाकाले विजयोव्याख्यातइति भावविजय औदयिकादेर्भावस्य भावांतरेणौपशमिकादिनाविजयस्तदेवलोकविजययो स्वरूपमुपदर्श्य प्रकृतोपयोग्याहभवेत्यादि भवदिभावलोकग्रहणेन भवलोकएवाभिहितस्तं दोषगभीत्याङ्कस्यएवोपादायि तथावाचाविभायो कसायलोगो अहिगारोतस्सविजएणंति तस्यौदयिकभाव कषायलोकस्य औपशमिकादिभावलोकेन विजययोगतएवतदत्रप्रकृतइदमत्र हृदय अष्टविधलोकषड्विधविजययो प्राग्यावर्ण्यतस्वरूपयोर्भाव लोकभावविजययोरत्रोपयोगइति यथाचाष्टप्रकारेण कर्मणालोक' प्राणिगणोबध्यते बन्धस्योपमसृपत्वादाया घमसुपयेद्दत्वतदध्ययने प्रकृतमितिगाथार्थं तेनैवभावलोकविजयेन किंफलमित्याह विजयोगाहाविजित

पराजित कोऽसौ कषायलोकः औदयिकभावकषायलोक इति यावत् विजितकषायलोकः, ननु किमवाप्नोतीत्याह संसारान्मुच्यते क्षिप्रमत सम्यग्वितिष्ठति इत्येव खुशब्दोऽलङ्कारे अवधारणे वा निवर्त्तितुं देव एव किं कषायलोकादेव निवृत्तः संसारान्मुच्यते आहो स्विदन्यस्मा दपि पापोपादानहेतोरिति दर्शयति कामेत्यादिगाथार्थः सुगम गतो नामनिष्पन्नो निक्षेपः साम्प्रतं सूत्रालापक निष्पन्ननिक्षेपावसरः स च सूत्रे सति भवति सत्रास्खलितादिगुणोपेतं सूत्रानुगमे सूत्रमुच्चारयितव्यं तच्चेदं जे गुणे से मूलट्ठाणे इत्यादि सूत्रमस्य च निक्षेपनिर्युक्त्यनुग मेन प्रतिपदं निक्षेपः क्रियते तत्र गुणस्य पञ्चदशधा निक्षेपः दव्वे खेत्ते गाहा नामगुणः स्थापनागुणः द्रव्यगुणः क्षेत्रगुणः, कालगुणः, फल गुणः पर्यवगुणः गणनागुणः करणगुणः अभ्यासगुणः गुणागुणः अगुणगुणः भवगुणः शीलगुणः भावगुणश्चेति गाथासमासार्थः तदेवं सूत्रानुगमेन सूत्रे समुच्चरिते निक्षेपनिर्युक्त्यनुगमेन तदवयवे निक्षिप्ते सत्युपोद्घातनिर्युक्तेरवसरः सा च दव्वे खेत्ते इत्यादिना द्वारगाथा द्वयेनानुगन्तव्या साम्प्रतं सूत्रस्पर्शिक निर्युक्तेरवसरे सत्यपि सुगमनामस्थापनाव्युदासेन द्रव्यादिकमाह दव्वगुणो गाहा तत्र द्रव्यगुणो नाम द्रव्यमेव किमिति गुणानां यतो गुणिनि तादात्म्येन संभवात् ननु च द्रव्यगुणयोर्लक्षण विधानभेदाद्भेद इत्याह द्रव्यलक्षणं गुणपर्याय वद्द्रव्यं विधानमपि धर्माधर्माकाशजीव पुद्गलादिकमिति गुणलक्षणं द्रव्याश्रयिणः सहवर्त्तिनो निर्गुणा गुणा इति विधानमपि ज्ञानेच्छाद्वेषरूपरसगन्धस्पर्शादय स्वगतभेदभिन्नाइति नैष दोषो यतः द्रव्ये सचित्ताचित्त मिश्रभेदभिन्ने सगुणत्वात्तादात्म्येन स्थितत्वाच्चा चित्तद्रव्यं द्विधा रूप्यरूपि च तत्रारूपिद्रव्यं त्रिधा धर्माधर्माकाशभेदभिन्न तत्र गतिस्थित्यवगाह दानलक्षणं गुणो यस्मादनन्ताऽगुरुलघु पर्याय लक्षणं तत्त्वान्नतीतत्त्व यस्मादपि रूप्यं न भेदेनव्यवस्थितमगुरुलघुपर्यायोऽपि तत्पर्यायत्वादेव एवोऽधर्मोऽस्याप्यकाशकृत्स्नमयी यवत् रूपिद्रव्यमपि स्कन्धतद्देश प्रदेशपरमाणुभेदतस्य रूपादयो गुणाः न भेदेन व्यवस्थितभेदेनानुपलब्धे संयोगविभागभावात्साम्प्र तं तथा सचित्तमपि उपयोगलक्षणलक्षितजीवद्रव्यं नयतस्माद्भिन्ना ज्ञानादयो गुणास्तद्भेदे जीवस्याचेतनत्वप्रसंगात्तस्य बन्धाद्भविष्यतीति चेत् न गुणाश्रितगुरोरिव यथोयतो न भिन्नस्तो न तीव्र शक्ति कर्त्तुं मन्ये नपार्यन्नम्बं ध, प्रदीपवत्स्वपरप्रकाशकत्वात्प्रकाशमित्यनयैषविद्यामिश्रद्रव्यो पाकत्वसंयोजनात्प्रगुप्ता कार्य्यतिगाथार्थं तदेवं द्रव्यगुणयो रैकान्तेनैकत्वे प्रतिपादिते सत्याह शिष्य तत्किमिदानीमभेदोऽस्तु नैतदप्यस्ति यत, सर्वथाभेदेऽभ्युपगम्यमाने एकस्यैकेनैवेन्द्रियेण गुणान्तरस्याप्युपलब्धेः रपरेन्द्रियवैफल्यं स्यात् तथाऽभिमतफलरूपादौ चक्षुरायुपल भ्यमाने रूपाद्यात्मभूतावयविद्रव्याव्यतिरिक्त रसादेरप्युपलब्धि स्याद्रूपादिस्वरूपवदेवमभेदे रसादिरूपादौ अनुपलभ्यमानेऽपि सगुपलभ्येरन्नन्यथा विरुद्ध धर्माध्यासाद्भिद्येरन् घटपटवदिति तदेवं भेदाभेदोपपत्तिभिर्व्याकुलितमति, शिष्य पृच्छति उभययापि दोषो पनिदर्शनात्कथमङ्गीभवत्याचार्य आह अतएव भेदोऽस्तु तत्राभेदपक्षे द्रव्यगुणाभेदपक्षे तु भावो गुण इति तथा हि गुणगुणिनो पर्यायपर्यायिणोः सामान्यविशेषयोरवयवावयविनोर्भेदाभेदव्यवस्थानोमेवाभावसद्भावात् आह च दिव्यपक्षे चविजय दव्वविउत्तायपज्जवा णत्थि उप्पायट्ठिइ भंगा हंदिदवियलक्खणयं नयास्यस्यात्मदर्शाछिन्नाद्भेदसोपविद्धास्वलोकधातव भवन्त्यभिमेत फलायत सातोमवंतमायां प्रणताश्रितैः विध इत्यादिभ्यः पूर्वैरङ्गविद्भि भितमित्यत्र विस्तरेणैतदेवं निर्युक्तिकार सम्प्रति द्रव्यप्रधाने जीवद्रव्ये गुणमभेदेनव्यवस्थितमाह स किं च यथा कालो वोऽत्रि सयोगि वीर्यं सद्द्रव्यं तथा प्रदेशसंहारविसर्गाभ्यां या धारणात् प्रदीपवत् संकुचति विकसति च एवं जीवस्यात्मभूतो गुणो भेदं विना पि पयः पलभे शाद्यशाराचो शिर प्रिया पुनस्य शरीरमितितद्गमयएवासम समुद्घातवशात्संकुचति विकसति च सप्तम्य गुरु समन्ततश्चा त्त्वेन हननमितश्चेतश्चात्मप्रदेशानां प्रक्षेपणं समुद्घात स च कषायवेदना मारणान्तिक वैक्रियतैजसाहारक केवलिसमुद्घातभेदात्सप्तधा तत्र क षायसमुद्घातो नतानुबन्धि क्रोधाद्युपहतचेतस आत्मप्रदेशानामितश्चेतश्च प्रक्षेप इत्यर्थः वतीव्रतरवेदनोपहतस्यापि वेदनासमुद्घातः मारणान्ति कसमुद्घातो विमुमूर्षोरमुतमादिम्रियतोत्पत्तिप्रदेशं यावल्लोकान्ताद्वात्मप्रदेशानां भूयो भूयः प्रक्षेपसंहाराविति वैक्रियसमुद्घातो वैक्रियलब्धिम तो वैक्रियोत्पादनाय बहिरात्मप्रदेशप्रक्षेप तैजससमुद्घातस्तै जस शरीरनिमित्तं तेजोलेश्यालब्धिमतस्ते जोलेश्याप्रक्षेपावसरे द्वितीयाहार कसमुद्घातश्चतुर्दशपूर्वविद आहारकलब्धिमत कश्चित् देशगमनाय तीर्थकरान्तिकं गमनार्थमाहारकशरीरमुत्पादयतु बहिरात्मप्रदेश

क्षायोपशमिकं दर्शनसप्तकक्षयात् क्षायिकं चारित्रं मोहनीयोपशमादौपशमिकं भव्यत्वात्पारिणामिक इति उक्तो जीवभावगुणः साम्प्रत
मजीवभावगुणः स चौदयिक पारिणामिकयोरेव सम्भवति नान्येषु तत्रौदयिकस्तावदुदये भव औदयिकः स चाजीवाश्रयो अनयाविवक्ष
याय इतकाश्चित् प्रकृतय पुद्गलविपाकिन्य एव भवन्ति का पुनस्ता उच्यन्ते औदारिकादीनि शरीराणि पञ्चषट् संस्थानानि त्रीण्यङ्गोपा
ङ्गानि षट् संहननानि वर्णपञ्चकं गन्धद्वयं पञ्चरसा अष्टौ स्पर्शा अगुरुलघुनाम उपघातनाम पराघातनाम उद्योतनाम आतपनाम नि
र्माणनाम प्रत्येकनाम साधारणनाम स्थिरनाम अस्थिरनाम शुभनाम अशुभनाम एता सर्वा अपि पुद्गलविपाकिन्य सत्यपि जीवसंब
न्धित्वे पुद्गलविपाकित्वादासामिति पारिणामिको जीवगुणस्तु द्वेधा अनादि पारिणामिकः सादिपारिणामिकश्चेति तत्रानादि पारिणामि
को धर्माधर्माकाशानां गतिस्थित्यवगाहलक्षण सादिपारिणामिकस्त्वभ्रेन्द्रधनुरादीनां परमाणूनाञ्च वर्णादिगुणान्तरापत्तिरिति
गाथा तात्पर्यार्थ उक्तो गुणोऽथ मूलनिक्षेपार्थमाह मूलेवक्कङ्गाहा मूलस्य षोढा निक्षेपो नामस्थापना द्रव्यक्षेत्रकालभावभेदात् नामस्थापने
गतार्थे द्रव्यमूलं ज्ञशरीर भव्यशरीरव्यतिरिक्तं त्रिधा औदयिकमूलमुपदेश मूलमादिमूलञ्चेति तत्रौदयिकद्रव्यमूलं वृक्षादीनां मूल
त्वेन परिणतानि यानि द्रव्याणि उपदेशमूलं यश्चिकित्सको रोगप्रतिघातसमर्थं मूलमुपदिशत्यातुरायेति तच्च पिप्पलीमूलादिक
आदिमूलं नाम येन आदि मूलोत्पत्त्या आद्यं कारणं तच्च तस्य वरनामगोत्र प्रकृतिप्रत्ययान्मूलं निर्वर्त्तनोत्तरोत्तर प्रकृतिप्रत्ययाच्च कन्द
स्तदुत्पद्यते एतदुक्तं भवति तेषामौदारिकशरीरत्वेन मूलनिर्वर्त्तकानां पुद्गलानामुद्यमानता कर्म्म वा शरीरस्याद्यकारणं क्षेत्रमूलं यस्मिन्
क्षेत्रे मूलं उत्पद्यते व्याख्यायते वा एवं कालमूलमपि यावन्तं कालं मूलमास्ते भावमूलन्तु त्रिधेति गाथार्थं तथा हि औदयिकगाहा भावमूलं
त्रिविधं औदयिकभावमूलं उपदेष्टृमूलं आदिमूलञ्चेति तत्रौदयिकभावमूलं वनस्पतिकायमूलत्वमनुभवन्नामगोत्रकर्म्मोदयात् मूलजीव
एव उपदेष्टृभावं मूलत्वाचार्य उपदेष्टा ये कर्म्मभि प्राणिनो मूलत्वेनोत्पद्यन्ते तेषामपि मोक्षसंसारयोर्वा यदादिप्रधानमूलं तस्य चोपदेष्टृत्वो
तदेवदर्शयति विणयकसायाति उपाई तत्र मोक्षस्यादिमूलं ज्ञानदर्शनचारित्रतपऔपचारिकरूप पञ्चधा विनयस्तस्य लब्धात्मोक्षावाप्तेः
तथा चाह विणयाओ णाणं णाणाओ दंसणं दंसणाहि चरणन्ति चरणाहिंतो मोक्खो मुक्खे सुक्खं अणावाहं विनयफलं शुश्रूषा गुरुशुश्रूषायो
फलं श्रुतज्ञानं ज्ञानस्य फलं विरतिर्विरतिफलञ्चाश्रवनिरोध संवरफलं तपोबलमथ तपसो निर्ज्जराफलं दृष्टं तस्मात् क्रियानिवृत्ति क्रियानि
वृत्तेरयोगित्वं योगनिरोधात् भवसन्ततिक्षयः सन्ततिक्षयान्मोक्ष तस्मात्कल्याणानां सर्वेषां भाजनं विनय इत्यादि संसारस्य त्वादिमूलं विषय
कषाया इति मूलमुक्तमिदानीं स्थानस्य पञ्चदशधा निक्षेपमाह नामठवणागाहा तत्र द्रव्यस्थानं ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्याणां स
चित्ताचित्तमिश्राणां स्थानमाश्रय क्षेत्रस्थानं भरतादि ऊर्द्ध्वतिर्यग्लोकादि चेति यत्र वा क्षेत्रे स्थानं व्याख्यायते अद्धाकालस्य स्थानं द्विधा
कायस्थितिभवस्थितिभेदात् तत्र कायस्थिति पृथिव्यप्तेजोवायूनामसंख्येया उत्सर्पिण्यवसर्पिण्यो वनस्पतेस्तु ता एवानन्ता विकलेन्द्रियाणां स
ङ्ख्येयानि वर्षसहस्राणि पञ्चेन्द्रियतिर्यग्मनुजानां सप्ताष्टौ वा भवा भवस्थितिस्तु वायूदकवनस्पतिपृथिवीनां त्रिसप्तदश द्वाविंशतिवर्षसहस्रात्मिका तेजस
स्त्रीण्यहोरात्राणि द्वीन्द्रियाणां शङ्खादीनां द्वादशवर्षाणि त्रीन्द्रियाणां पिपीलिकानामेकोनपञ्चाशदहोरात्राणि चतुरिन्द्रियाणां भ्रमरा
दीनां षण्मासाः पञ्चेन्द्रियतिर्यग्मनुष्याणां त्रीणि पल्योपमानि देवानां नारकादीनां च कायस्थितिर्भवाद्भवस्थितिः त्रयस्त्रिंशत्सागरोपमाणी
ति द्वयमुत्कृष्टाद्दिरूपादि जघन्यात् सर्वेषामन्तर्मुहूर्त्तिका नवरं देवनारकयोर्दशवर्षसहस्राणीति अथवा अद्धास्थानं समयावलिका मुहूर्त्ता
होरात्र पक्षमासर्त्वयन संवत्सरयुगपल्योपम सागरोपमोत्सर्पिण्यवसर्पिणीपुद्गल परावर्त्तातीतानागतसर्वाद्धारूपमिति ऊर्द्ध्वस्थानन्तु
कायोत्सर्गादिकमस्थो पलवणचाम्निमग्नाद्यपिदृश्यते उपरतिविरतिसत्स्थानं देशसर्वत्र यथाक्रमं साधु विषयवसतिस्थानयोर्यत्र ग्राम
गृहादौ वसति संयमस्थानं संयम सामायिकच्छेदोपस्थापनीयपरिहार विशुद्धिसूक्ष्मसम्पराय यथाख्यातरूप स पञ्चविधस्तस्यासंख्ये
यानि संयमस्थानानि किन्तदसंख्यमितिचेत् अतीन्द्रियत्वादर्थस्य न शक्यते चाग्विदैर्दृष्टुं शक्यते आगमानुसारोपमायानूच्यते इह एकसमयेन
सूक्ष्माग्निजीवा असंख्येयलोकाकाशप्रदेशप्रमाणा उत्पद्यन्ते तेभ्योऽग्निकायत्वे ... येगुणास्ततोऽप्यनुभागबन्धाध्यवसायस्था

ग्यावध्यमानात्वङ्घाद्यातुह्नादीयांइति नोद्रव्यकर्म्म रूपी वलादिकर्म्म अथकर्म्मवर्गणात.पातिनः पुद्गलाद्रव्यकर्म्म त्यवाचिका पुनस्ताव गंणाइति सङ्कीर्त्तते द्रव्यवर्गणा.सामान्येन चतुर्विधा द्रव्यचेत्रकालभावभेदात् तत्रद्रव्यतएकद्यादिसंख्येया संख्येयानंत प्रदेशिकाचे त्रतोवगाढद्रव्यैकद्यादि संख्येयासंख्येय प्रदेशात्मिका कालतएकद्वादिसंख्येयासंख्येय समयस्थितिकाभावतो रूपरसगन्धस्पर्श स्पर्शगतभेदात्मिका. सामान्यतोविशेषतस्तूच्यन्ते तत्रपरमाणूनामेकावर्गणा एवमेकैकपरमाणूपचयात्संख्येय प्रदेशिकानां स्कन्धानासं ख्येयाअसंख्येय प्रदेशिकानां असंख्येयाएताश्चौदारिकादि परिणामाग्रहणयो अनंतप्रदेशिकानामप्यनंता अग्रहणयोग्यास्ता उल्लं घ्यौदारिकग्रहणयोग्याअनन्ता तत्प्रदेशिकाअल्पत्वताएवभवंति तत्रायोग्योत्कृष्टवर्गणाया रूपेप्रक्षिप्ते औदारिकग्रहणयोग्याअनन्त प्रदेशिकाअल्पत्वताएवभवति तत्रायोग्योत्कृष्टवर्गणाया रूपेप्रक्षिप्ते औदारिकशरीरग्रहणयोग्या जघन्यावर्गणाभवंति पुनरेकैकप्रदे शवृद्ध्याप्रवर्द्धमाना औदारिकयोग्योत्कृष्टवर्गणाया यदनंताभवत्यथ जघन्योत्कृष्टयोः कोविशेषोजघन्यत उत्कृष्टाविशेषाधिका विशेष स्तस्याएवौदारिक जघन्यवर्गणाया अनंतभागस्तस्य चानंतपरमाणुमयत्वादेकैकोत्तरप्रदेशो पचयेसत्यप्यौदारिकयोग्य वर्गणानांज घन्योत्कृष्ट मध्यवर्त्तिनीनामानन्त्य तत औदारिकायोग्योत्कृष्ट वर्गणाया रूपप्रक्षेपेणायोग्य वर्गणाना जघन्योत्कृष्ट मध्यवर्त्तिनीना मानन्त्यमौदारिका योग्योत्कृष्टवर्गणाया रूपप्रक्षेपेणायोग्यवर्गणा जघन्याभवति एताश्चाप्येकैकप्रदेश वृद्ध्योत्कृष्टातावानंताभवंति जघन्योत्कृष्ट वर्गणानांको विशेषोजघन्याभ्यो असंख्येयगुणास्ताश्च बहुप्रदेशत्वादतिसूक्ष्म परिणामत्वाच्चौदारिकस्यानता एवा ग्रहणयोग्य भवंत्यल्पप्रदेशत्वाद्बादर परिणामत्वाच्चवैक्रियस्यापीति अत्रच यथाप्रदेशोपचयस्तथा विस्रसापरिणामवशाद्वर्गणानांसूक्ष्म तरत्वमवसेय एतदेवोत्कृष्टोपरिरूप प्रक्षेपयोग्योयोग्यादिकं वैक्रियशरीरवर्गणानां जघन्योत्कृष्टविशेष स्तत्रापिवावसेय तथावैक्रियाद्वा रकांतरालवर्त्ययोग्य वर्गणाना जघन्योत्कृष्टविशेषासंख्येय गुणात्वमिति पुनरप्ययोग्यवर्गणो परिरूपप्रक्षेपात्जघन्याहारकशरीर योग्यवर्गणाभवति तासप्रदेशवृद्ध्यावर्द्धमाना उत्कृष्टायावदनन्ताभवति अथजघन्योत्कृष्टयो. कियदंतरमित्युच्यते जघन्याभ्युत्कृष्टा विशेषाधिका कोविशेषइतिचेत् जघन्यवर्गणाया एवानंतभागस्तस्याप्यनंत परमाणुदाहारका ग्रहणंचयोग्यवर्गणाना प्रदेशोत्तरवृद्धा नांचानंत्यमितिभावना तस्यात्मेवोत्कृष्टवर्गणाया रूपेप्रक्षिप्तेर्जघन्या आहारकाग्रहणवर्गणा तत प्रदेशवृद्ध्यावर्द्धमाना उत्कृष्टायावद नताएव आहारकस्य सूक्ष्मत्वाद्बहुप्रदेशत्वाच्चायोग्याएवभवति बादरत्वादल्पप्रदेशत्वाच्चतैजसस्येति जघन्योत्कृष्टयो कियदन्तरमि त्युच्यते अजघन्याभ्युत्कृष्टा अनन्तगुणा केनगुणाकारेणेतिचेत् अभव्येभ्योनन्तगुणा सिद्धानामनन्तभागइति तदुपरिरूपेप्रक्षिप्ते तैजसशरीरवर्गणा जघन्याएताश्चापि प्रदेशवृद्ध्यावर्द्धमाना उत्कृष्टायावदनंताभवंति अजघन्योत्कृष्टयो. कियदन्तरंजघन्याभ्युत्कृष्टा विशेषाधिकाविशेषस्तु जघन्यवर्गणानंतभागस्तस्यानंतप्रदेशत्वाजघन्योत्कृष्टान्तरालवर्गणानामानन्त्यं भवति तैजसोत्कृष्टवर्गणोप रिरूपेप्रक्षिप्ते सत्यग्रहणवर्गणाभवति एवमेकादिवृद्ध्योत्कृष्टाता अनंतास्ताश्चातिसूक्ष्मत्वाद् बहुप्रदेशत्वाच्चतैजसस्याग्रहणयोग्याबा दरत्वात्अल्पप्रदेशत्वाच्चभाषाद्रव्यस्यापीति जघन्योत्कृष्टयोरनंतगुणत्वेन विशेषोगुणाकारश्चाभव्येभ्योनंतगुणा. सिद्धानामनंतभागइ तितस्यामयोग्योत्कृष्टवर्गणाया रूपेप्रक्षिप्ते जघन्याभाषाद्रव्यवर्गणाभवति तस्याश्चप्रदेशवृद्ध्या उत्कृष्टवर्गणापर्यंताण्यनंतानिस्थाना निभवति जघन्योत्कृष्टयोर्विशेषोजघन्यवर्गणानंतभागाधिकोत्कृष्टवर्गणाभवति अस्याप्यनंतभागस्यानंत परमाण्वात्मकत्वाद्भाषाद्रव्य योग्यवर्गणानामानंत्यमवसेय तदनेनैकादिप्रदेशवृद्धिक्रमेणायोग्यवर्गणानां जघन्योत्कृष्टादिक चात्रापिनवरंजघन्योत्कृष्टयोर्भेदोयं अभव्यानन्तगुण सिद्धानन्तभागात्मकस्तासांच पूर्वहेतुकदम्बकादेव भाषाद्रव्यानापानद्रव्ययोरयोग्यत्वमवसेय अयोग्योत्कृष्टवर्गणा यारूपेप्रक्षिप्ते आनापानवर्गणाजघन्या ततोरूपोत्तरवृद्ध्योत्कृष्टवर्गणाता अनन्ताभवन्ति जघन्योत्कृष्टाजघन्यानन्तभागाधिका तदुपरिरूपोत्तरवृद्ध्या जघन्योत्कृष्टभेदेनाग्रहणवर्गणाविशेष स्त्वभव्येभ्योनन्तगुणा.सिद्धानामनन्तभागः पुनरप्ययोग्योत्कृष्टवर्गणाप रिप्रदेशादिवृद्ध्याजघन्योत्कृष्टभेदामनोद्रव्यवर्गणाजघन्यवर्गणानन्तभागोविशेष पुनरपिप्रदेशोत्तरक्रमेणाग्रहणवर्गणाविशेषश्चाभव्या

नन्तगुणादिकमाथ प्रदेशबहुत्वादतिसूक्ष्मत्वाच्च मनोद्रव्यायोग्या अल्पप्रदेशत्वाद्बादरत्वाच्च कार्म्मणस्यापि तदुपरिरूपेप्रक्षिप्ते जघन्या
कर्म्मणशरीरवर्गणा' पुनरप्येकैकप्रदेशवृद्ध्यावर्द्धमाना उत्कृष्टायावदनन्ताभवन्ति अथजघन्योत्कृष्टयोः क प्रतिविशेषइत्युच्यतेजघन्य
वर्गणानन्तभागाधिकोत्कृष्टवर्गणा सचानन्तभागानन्तानन्तपरमाण्वात्मको तएवानन्तभेदभिन्ना'कर्म्मद्रव्यवर्गणाएवंभवति या
मिथ्यात्वप्रयोजनद्रव्यकर्म्मणोष्याविरत्यासितत्वादितिशेषाच्चपिवर्गणा क्रमायाता विनेयजनानुग्रहार्थं मुत्पाद्यतेपुनरप्युत्कृष्टकर्म्मवर्ग
णोपरिरूपादिप्रक्षेपेण जघन्योत्कृष्टभेदभिन्नाध्रुववर्गणाभवन्दाश्च, उत्कृष्टा'सर्व्वजीवेभ्योनन्तगुणास्तदुपरिरूपप्रक्षेपादिक्रमेणानन्ताए
वजघन्योत्कृष्टभेदाध्रुववर्गणाअध्रुवत्वादध्रुवा पाक्षिकसद्भावादध्रुवत्व जघन्योत्कृष्टभेदोनतरोक्तएवतदुत्कृष्टापरिरूपादिप्रक्षेपा
जघन्योत्कृष्टभेदाधप्रमताएवशून्यावर्गणाभयतिजघन्योत्कृष्टविशेष पूर्ववत्तायास्तासदारेप्यभावात् शून्यवर्गणाइत्यभिधाएतदुक्तंभवति
अध्रुववर्गणोपरिप्रदेशवृद्ध्यानता अपि नभवतीति प्रथमाशून्यवर्गणा तदुपरिरूपादिवृद्ध्या जघन्योत्कृष्टभेदा' प्रत्येकशरीरवर्गणाभवं
तिजघन्यात क्षेत्रपल्योपमासंख्येय भागप्रदेशगुणोत्कृष्टास्तदुपरिरूपोत्तरादि वृद्ध्याजघन्योत्कृष्टभेदाअनन्ताएवशून्यवर्गणाभवतिज
घन्यवर्गणातउत्कृष्टाश्च सम्ख्येयभागप्रदेशगुणातदसंख्येयभागोप्यसंख्येय लोकात्मकइति द्वितीयाशून्यवर्गणा तदुपरिरूपादिवृद्ध्याबा
दरनिगोदशरीरवर्गणाजघन्यात क्षेत्रपल्योपमासंख्येयभाग प्रदेशगुणोत्कृष्टा तदुपरिरूपादिवृद्ध्या जघन्योत्कृष्टभेदा तृतीयाशून्यवर्ग
णाउत्कृष्टाजघन्यातो सख्येयगुणाकोगुणकारइत्युच्यते अङ्गुलासंख्येयभागप्रदेशराशेरावलिकाकालासंख्येयभागसमय प्रमाणखण्डपी
न युग्यवर्ग मलस्यासंख्येय भागप्रदेशप्रमाणइतितदुपरिरूपोत्तरवृद्ध्याजघन्योत्कृष्टभेदासेसूक्ष्मनिगोदशरीरवर्गणाजघन्यातउत्कृष्टाव
लिकाकालसंख्येयभागसमयगुणातदुपरि रूपोत्तरवृद्ध्या जघन्योत्कृष्टभेदाचतुर्थी शून्यवर्गणाजघन्यातउत्कृष्टाचतुरस्त्रीकृतलोकस्या
सख्येया, श्रेणयस्ताश्च प्रतरासंख्येयभागतुल्याइति तदुपरिरूपादिवृद्ध्या जघन्योत्कृष्टभेदा महास्कन्धवर्गणा जघन्यातउत्कृष्टाक्षेत्रप
ल्योपमस्यासंख्येयगुणायेति उक्ता समासतोवर्गणा विशेषार्थिनातुकर्मप्रकृतिरवलोकनीयेति सांप्रत प्रयोगवीर्यंतरायक्षयोपशमावि
र्भूतवीर्येणात्मना प्रकर्षेणयुज्यत इतिप्रयोग सचमनोवाक्कायलक्षण, पञ्चदशधाकथमित्युच्यते तत्रमनोयोग' सत्यासत्यामिश्रानुभय
रूपचतुर्द्धंवं वाग्योगोपिकाययोग सप्तधा औदारिकमिति वैक्रियमिश्राहारकाहारकमिश्रकर्मण योगभेदात्तत्रमनोयोगोमन प
र्याप्तस्यमनुष्यादेर्वाग्योगोपि द्वीन्द्रियादीनां औदारिकयोगस्तिर्यग्मनुजायाः शरीरपर्याप्ते रूर्द्ध तदारतस्तुमिश्र, केवलिनोवासमुद्घात
गतस्यद्वितीयषष्ठसप्तमसमयेषु वैक्रियकाययोगोदेवनारकबादरवायूनां अन्यस्यवावैक्रियलब्धिमतस्तन्मिश्रस्तु देवनारकयोरुत्पत्तिसम
येऽन्यस्यवावैक्रियनिर्वर्त्तयत आहारककाययोगोचतुर्द्दशपूर्वविद आहारकशरीरस्यस्य तन्मिश्रस्तु निवर्त्तनाकाले कार्म्मणयोगोविग्रह
गतौ केवलिसमुद्घातेवा तृतीयचतुर्थपञ्चमसमयेष्विति तदनेन पंचदशविधेनापि योगेनात्माष्टौप्रदेशान् विहायोत्तप्तभोजनोदकवद्
द्वर्त्तमानैः सर्वैरेवात्मप्रदेशैर्योगात् प्रदेशावष्टब्धाकाशदेशस्थ कार्म्मणशरीरयोग्यंकर्मदलिकंबध्नाति तत्प्रयोगकर्मेत्युच्यते उक्तं च जाव
णएसजीवेएयएवेयइचलइफंदइइच्चादि तावणअट्ठविहबंधएवा सत्तविहबंधएवा छव्विहबंधएवा एगविहबंधएवा छव्विहबंधएवाएगविह
बंधएवा नाणंबंधएवा समुदानकर्मसमुदानं पृषोदरादित्वात् पूर्व्वाचार्यदत्तनिर्देशात् पृषोदरादिपाठेन आकारस्याकारादेशेनरूपं भवति तत्रप्रयो
गकर्मणैकरूपतया गृहीतानां कर्मवर्गणानां सम्यक्मूलोत्तरप्रकृतिस्थित्यनुभावप्रदेशबंधभेदेनाङ्मर्यादयादेश सर्वोपघातिरूपयात
थास्पृष्टनिधत्तनिका चितावस्थयावस्थीकरणं समुदाय तदेयकर्मसमुदानकर्म तत्रमूलप्रकृतिबंधो ज्ञानावरणीयादिरुत्तरप्रकृतिबंध
स्तूच्यते उत्तरप्रकृतिबंधो ज्ञानावरणीयपंचधामतिश्रुतावधिमन, पर्यायकेवलावरणभेदात् तत्रकेवलावारकं सर्वघातिशेषाणिदेशसर्व
घातीन्यपि दर्शनावरणीयनवधानिद्रा पंचकदर्शनचतुष्टयभेदात् तत्रनिद्रापंचकं प्राप्तदर्शनलब्ध्युपयोगोपघातकारिदर्शनचतुष्टयंतुदर्श
नलब्धिप्राप्तेरेवात्रापि केवलदर्शनावरण सर्वघातिशेषाणितुदेशत' वेदनीयद्विधासातासातभेदात्मोहनीय द्विधादर्शनचारित्रभेदात्
तत्रदर्शनमोहनीय त्रिधामिथ्यात्वादिभेदात् प्रथतस्त्वेकविधं चारित्रमोहनीयं षोडशकषायनवनो कषायभेदात्पंचविंशतिविधस्तत्रा

पिमिथ्यात्वसंज्वलनवर्ज्जं द्वादशकषायाश्च सर्व्वघातिन्य शेषास्तु देशघातिन्य इति आयुष्कं चतुर्द्धा नारकादिभेदात् नाम द्विचत्वारिंशद्भेदं
गत्यादिभेदात् त्रिनवतिभेदं चोत्तरोत्तरप्रकृतिभेदात् गतिश्चतुर्द्धा जातिरेकेन्द्रियादिभेदात् पंचधा शरीरमौदारिकादिभेदात् पंचधा
औदारिकवैक्रियाहारकभेदादङ्गोपाङ्गं त्रिधा निर्म्माणनाम सर्व्वजीवशरीरावयवनिष्पादकमेकधा बन्धननाम औदारिककर्म्मवर्गणैक
त्वापादकं पञ्चधा संघातनामौदारिकादि कर्म्मवर्गणारचनाविशेषसंस्थापकं पञ्चधा संस्थानानि चतुरस्रादीनि षोढा संहनननाम वज्रर्षभ
नाराचादि षोढैव स्पर्शोऽष्टधा रसः पञ्चधा गन्धो द्विधा वर्णः पञ्चधा आनुपूर्व्वी नारकादि चतुर्द्धा विहायोगतिः प्रशस्ताप्रशस्तभेदात् द्विधा अगुरु
लघूपघातपराघातातपोद्योतोच्छ्वासप्रत्येकसाधारण त्रसस्थावरशुभाशुभसुभगदुर्भगसुस्वरदुःस्वरसूक्ष्मबादरपर्याप्तकापर्याप्तकस्थिरा
स्थिरत्वानादेय यशःकीर्त्त्ययशःकीर्त्ति तीर्थकरनामानि प्रत्येकमेकविधानीति गोत्रमुच्चनीचभेदात् द्विधा अन्तरायं दानलाभभोगोप
भोगवीर्यभेदात् पञ्चधेत्युक्तं प्रकृतिबन्धो बन्धकारणानि तु गाथाभिरुच्यन्ते पडिणीयमंतराइय उवघाए तप्पओसनिण्हवणे आवरणद
गं बन्धइ भूओ अच्चासणाए य भूयाणुकंपवय जोगउज्जुओ खन्तिदाण गुरुभत्तो बंधइ भूओ सायविवरीए बन्धती इयरं अरहंतसिद्धचेइय
तवसुयगुरु साहुसंघपडिणीओ बन्धइ दंसणमोहं अणंतसंसारिओ जेणं तिव्वकसाओ बहुमोहपरिणतो रागदोससंजुत्तो बन्धइ चरि
त्तमोहं दुविहंपि चरित्तगुणघाती मिच्छद्दिट्ठी महारंभपरिग्गहो तिव्वलोभनिस्सीलो निरयाउयं निबन्धइ पावमती रोद्दपरिणामो उ
म्मग्गदेसओ मग्गणासओ गूढहियय माइल्लो सढसीलो य ससल्लो तिरियाउं बन्धई जीवो एगतीए तणुउम्मग्गदेसओ मग्गणासओ गूढहिय
य माइल्लो कसाओ दाणरओ सीलसंजमविहूणो मज्झिमगुणेहिं जुत्तो मणुयाउं बन्धती जीवो अणुव्वयमहव्वएहिं य बालतवोकामनिज्ज
राए य देवाउयं निबन्धइ सम्मद्दिट्ठी उ जो जीवो मणवयणकायवंको माई गारवेहिं पडिबद्धो असुभं बन्धइ नामं तप्पडिपक्खेहिं सुभं
नामं अरिहंतादिसु भत्तो सुत्तरुई पयणुमाणगुणपेही बन्धइ उच्चागोयं विवरीयं बन्धई इयरं पाणवहादीसु रतो जिणपूयामोक्खम
ग्गविग्घयरो अज्जेइ अन्तरायं न लहइ जो णिच्छियं लाभं स्थितिबन्धो मूलोत्तरप्रकृतीनामुत्कृष्टेतरभेदः तत्रोत्कृष्टा मूलप्रकृतीनां ज्ञानावर
णीयदर्शनावरणीयवेदनीयान्तरायाणां त्रिंशत्सागरोपमकोटीकोट्यो यस्य यावत्यः कोटीकोट्यः स्थितिस्तस्य तावन्ति वर्षशतान्यबाधा तदुप
रि प्रदेशतो विपाकतो वा अनुभव एतदेव प्रतिकर्म्म स्थिति योज्यमिति सप्ततिर्मोहनीयस्य नामगोत्रयोर्विंशति स्त्रयस्त्रिंशत्सागरो
पमाण्यायुषः पूर्वकोटीत्रिभागोऽबाधा जघन्या ज्ञानदर्शनावरण मोहनीयान्तरायाणामन्तर्मुहूर्त्तं नामगोत्रयोरष्टौ मुहूर्त्ता वेदनीयस्य
द्वादशायुषः क्षुल्लकभवः आनापान सप्तदशभाग साम्प्रतमेतदेव बन्धद्वयमुत्तरप्रकृतीनामुच्यते तत्रोत्कृष्टा मतिश्रुतावधिमनःपर्यायके
वलावरणनिद्रापञ्चकचक्षुर्दर्शनादिचतुष्का सद्वेद्यदानाद्यन्तरायपञ्चकभेदानां त्रिंशदुत्तरप्रकृतीनां त्रिंशत्सागरोपमकोटीकोट्यः
स्त्रीवेदसातवेदनीयमनुजगत्यानुपूर्व्वीणां च तदर्द्धं पञ्चदश मिथ्यात्वस्यौघिक मोहनीयस्य कषायषोडशकस्य चत्वारिंशत्कोटीकोट्यो
नपुंसकवेदारतिशोकभयजुगुप्सा नरकतिर्य्यग्गत्येकेन्द्रिय पञ्चदश मिथ्यात्वस्यौघिक मोहनीयस्य कषायषोडशकस्य चत्वारिंशत्कोटी
कोट्यो नपुंसकवेदारतिशोकभयजुगुप्सा नरकतिर्य्यग्गत्येकेन्द्रियजात्यौदारिकवैक्रियशरीरतदङ्गोपाङ्गद्वयतैजसकार्म्मणहुंडसंस्था
नान्त्यसंहननवर्णगन्धरसस्पर्श नरकतिर्यगानुपूर्व्वीगुरुलघूपघातपराघातोच्छ्वासातपोद्योताप्रशस्तविहायोगति त्रसस्थावरबादरप
र्याप्तप्रत्येकास्थिरा शुभदुर्भगदुःस्वरानादेया यशःकीर्त्तिनिर्माणनीचैर्गोत्ररूपाणां त्रिचत्वारिंशत उत्तरप्रकृतीनां विंशतिः पुंवेद
हास्यरतिदेवगत्यानुपूर्व्व्योर्दश संस्थानसंहनन प्रशस्तविहायोगतिस्थिर शुभसुभगसुस्वरादेय यशःकीर्त्त्युच्चैर्गोत्ररूपाणां पञ्चादशा
नामुत्तरप्रकृतीनां दश न्यग्रोधसंस्थान द्वितीयसंहननयोर्द्वादश तृतीयसंस्थाननाराच संहननयोश्चतुर्दश कुब्जसंस्थानार्द्धनाराच
संहननयोः षोडश वामनसंस्थान कीलिकासंहनन द्वित्रिचतुरिन्द्रियजाति सूक्ष्मापर्य्याप्तक साधारणनाम्नामष्टानामुत्तरप्रकृतीनां
मष्टादश आहारकतदङ्गोपाङ्गतीर्थकरनाम्नां सागरोपमकोटीकोटिरन्तर्मुहूर्त्तमबाधा देवनारकायुषोरौघिक यत्तिर्यङ्मनुष्या
युः पल्योपमत्रय पूर्वकोटित्रिभागोऽबाधा उक्तोत्कृष्टः स्थितिबंधोऽजघन्य उच्यते मत्यादिपञ्चचक्षुर्दर्शनाद्यावरण चतुष्कसंज्वलनलोभ

